तथा ज्ञेयावरण का प्रहाण, मोक्ष एवं सर्वज्ञता की प्राप्ति ( अधिगम ) के लिए है। क्लेश मोक्षप्राप्ति में बाधक हैं, अतः उनके नष्ट हो जाने से मोक्ष का अधिगम होता है। ज्ञेयावरण सभी ज्ञेय पदार्थों के ज्ञान की प्रवृत्ति में बाधक अक्लिष्ट अज्ञान है। उसके प्रहाण से समस्त ज्ञेय पदार्थों का अपरोक्ष निर्बाध और स्पष्ट ज्ञान होता है, जिससे सर्वज्ञता की प्राप्ति होती है।

अथवा धर्म एवं पुद्गल के आग्रह में पड़े हुए ( मनुष्य ) चित्त को यथार्थतः नहीं जानते हैं, इसलिए धर्मनैरात्म्य एवं पुद्गलनैरात्म्य के दर्शन से सफल विज्ञप्तिमात्रता में प्रवेश के लिए प्रकरण का प्रारम्भ होता है।

अथवा विज्ञान के समान विज्ञेय भी वास्तविक है, ऐसा कुछ लोग मानते हैं, विज्ञेय के समान विज्ञान भी सांवृतिक है, पारमार्थिक नहीं, ( ऐसा भी कुछ लोगों का मत है ), इन दो प्रकार के एकान्तवादों के निषेध के लिए प्रकरण का प्रारम्भ होता है।

**आत्मधर्मोपचारो हि विविधो यः प्रवर्तते ।**

लोकशास्त्रयोरिति वाक्यशेषः ।

**विज्ञानपरिणामेऽसौ—**

आत्मधर्मोपचार इति संबध्यते। आत्मा धर्माश्चोपचर्यन्त इत्यात्मधर्मोपचारः। स पुनरात्मप्रज्ञप्तिर्[1] धर्मप्रज्ञप्तिश्च। विविध इत्यनेकप्रकारः। आत्मा जीवो जन्तुर्मनुजो मानव इत्येवमादिक आत्मोपचारः। स्कन्धा धातव आयतनानि रूपं वेदना संज्ञा संस्कारा विज्ञानमित्येवमादिको धर्मोपचारः। अयं द्विप्रकारोऽप्युपचारो विज्ञानपरिणाम एव, न मुख्ये आत्मनि धर्मेषु चेति।

कुत एतत् ?

धर्माणामात्मनश्च विज्ञानपरिणामाद् बहिरभावात्।

कोऽयं परिणामो नाम ?

अन्यथात्वम्। कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणकार्यस्यात्मलाभः परिणामः।

'आत्मा एवं धर्म का उपचार ( व्यवहार ) जो विविध प्रकार का होता है'। लोक और शास्त्र में यह वाक्य शेष है।

'वह विज्ञान के परिणाम के अन्तर्गत है'।

१. विज्ञप्ति।



आत्मा तथा धर्म के उपचार का यहां सम्बन्ध है। आत्मा तथा धर्म का जो उपचार होता है, उसे आत्मधर्मोपचार कहते हैं। उसे आत्मप्रज्ञप्ति तथा धर्मप्रज्ञप्ति भी कहते हैं। विविध शब्द का अर्थ है अनेक प्रकार। आत्मा, जीव, जन्तु, मनुज, मानव इत्यादि आत्मा का उपचार है।

स्कन्ध, आयतन, धातु, रूप, वेदना, संज्ञा, संस्कार, विज्ञान आदि धर्मोपचार हैं। ये दोनों प्रकार के उपचार विज्ञान के परिणाम में ही होते हैं, आत्मा और धर्म में नहीं।

यह क्यों ?

धर्म और आत्मा का विज्ञान के परिणाम से बाहर अभाव है।

यह परिणाम क्या है ?

अन्यरूप में हो जाना ही। कारणक्षण के विनाश काल में ही, कारणक्षण से विलक्षण कार्यक्षण की उत्पत्ति ही परिणाम है।

तत्रात्मादिविकल्पवासनापरिपोषाद् रूपादिविकल्पवासनापरिपोषाच्चालयविज्ञानादात्मादिनिर्भासो विकल्पो रूपादिनिर्भासश्चोत्पद्यते। तमात्मादिनिर्भासं रूपादिनिर्भासं च तस्माद् विकल्पाद् बहिर्भूतमिवोपादायात्माद्युपचारो रूपादिधर्मोपचारश्चानादिकालिकः प्रवर्तते विनापि बाह्येनात्मना धर्मैश्च। तद्यथा तैमिरिकस्य केशोण्डुकाद्युपचार इति। यच्च यत्र नास्ति तत् तत्रोपचर्यते। तद् यथा वाहीके गौः। एवं विज्ञानस्वरूपे बहिश्चात्मधर्माभावात् परिकल्पित एवात्मा धर्माश्च, न तु परमार्थतः सन्तीति विज्ञानवद् विज्ञेयमपिद्रव्यत[1] एवेत्ययमेकान्तवादो नाभ्युपेयः।

आत्मादि विकल्पवासना तथा रूपादि विकल्पवासना की परिपुष्टि के कारण आलयविज्ञान से आत्मादि आकारक तथा रूपादि आकारक विकल्प उत्पन्न होता है। उस आत्मादि तथा रूपादि की प्रतीति को उस विकल्प से पृथक् जैसा मानकर आत्मादि तथा रूपादि धर्मों का आरोप अनादि काल से आत्मा एवं धर्मों के बाह्य अस्तित्व के बिना ही प्रवृत्त होता है। यथा तिमिरव्याधि से ग्रस्त मनुष्य को सर्वत्र केशगुच्छ के दर्शन होते हैं ( जो वस्तुतः विद्यमान नहीं है )। ( यह उपचार क्या है ? ) जो पदार्थ जहाँ नहीं हैं, वहाँ उनके होने का आरोप होता है। यथा बाहीक में बैल का उपचार होता है। इस प्रकार विज्ञान के स्वरूप के अन्तर्गत तथा बाहर भी आत्मा

१. A. विज्ञेयमप्युच्यत।

एवं धर्मों का अभाव होने से आत्मा एवं धर्म कल्पनामात्र हैं, परमार्थतः उनका
अस्तित्व नहीं है, इसलिए विज्ञान के समान विज्ञेय भी वास्तविक है यह
एकान्तवाद अभ्युपेय नहीं है।

उपचारस्य च निराधारस्यासंभवात् अवश्यं विज्ञानपरिणामो वस्तु-
तोऽस्तीत्युपगन्तव्यो[1] यत्रात्मधर्मोपचारः प्रवर्तते ; अतश्चायमुपगमो न
युक्तिक्षमो विज्ञानमपि विज्ञेयवत् संवृतित एव, न परमार्थत इति।
संवृतितोऽप्यभावप्रसङ्गान् न हि संवृतिर्निरुपादाना युज्यते। तस्मादय-
मेकान्तवादो द्विप्रकारोऽपि निर्युक्तिकत्वात् त्याज्य इत्याचार्यवचनम्।

एवं च सर्वं विज्ञेयं परिकल्पितस्वभावत्वात् वस्तुतो न विद्यते, विज्ञानं
पुनः प्रतीत्यसमुत्पन्नत्वाद् द्रव्यतोऽस्तीत्यभ्युपेयम्। प्रतीत्यसमुत्पन्नत्वं
पुनर् विज्ञानस्य परिणामशब्देन ज्ञापितम्।

उपचार निराधार नहीं हो सकता, इसलिए विज्ञान के परिणाम को अवश्य
वास्तविक समझना चाहिए, जिसके अन्तर्गत आत्मा एवं धर्म का उपचार होता
है। अतः यह मानना युक्तिसंगत नहीं है कि विज्ञान भी विज्ञेय के समान सांवृतिक
है, पारमार्थिक नहीं। ( ऐसा स्वीकार करने से ) संवृति रूप में भी उनका अभाव
प्राप्त होने लगेगा क्योंकि संवृति निराधार नहीं हो सकती। एतदर्थ यह दोनों
प्रकार का एकान्तवाद युक्तिरहित होने के कारण त्याज्य है, यह आचार्य-
वचन है।

इस प्रकार सभी विज्ञेय पदार्थ कल्पित स्वभाव वाले होने के कारण वास्तविक
नहीं हैं, किन्तु विज्ञान प्रतीत्यसमुत्पन्न होने के कारण वस्तुतः है, यह अभ्युपेय
है। ( विज्ञान की ) प्रतीत्यसमुत्पन्नता परिणाम शब्द से ज्ञापित है।

कथमेतद् गम्यते विना बाह्येनार्थेन विज्ञानमेवार्थाकारमुत्पद्यत
इति ? बाह्यो ह्यर्थः स्वाभासविज्ञानजनकत्वेन विज्ञानस्यालम्बनप्रत्यय
इष्यते, न तु कारणत्वमात्रेण समनन्तरादिप्रत्ययविशेषाप्रसङ्गात्।
संचितालम्बनाश्च पञ्चविज्ञानकायास्तदाकारत्वात्। न च संचितमव-
यवसंहतिमात्राद् अन्यद् विद्यते। तदवयवान् अपोह्य संचिताकारविज्ञा-
नाभावात्। तस्माद् विनैव बाह्येनार्थेन विज्ञानं संचिताकारमुत्पद्यते।

न च परमाणव एव संचितास्तस्यालम्बनं परमाणूनाम् अतदाकार-
त्वात्। न ह्यसंचितावस्थातः संचितावस्थायां परमाणूनां कश्चिदात्मा-
तिशयः। तस्माद् असंचितवत् संचिता अपि परमाणवो नैवालम्बनम्।

१. A. ऽस्त्युपगन्तव्यो।



यह कैसे जाना जाता है कि बाह्य पदार्थ के विना विज्ञान ही अर्थाकार
उत्पन्न हो जाता है ? बाह्यपदार्थ अपने समान विज्ञान का उत्पादक होने
से विज्ञान का आलम्बन प्रत्यय माना जाता है, कारण होने से नहीं अन्यथा
समनन्तरादि प्रत्ययों से कोई विशेषता नहीं रहेगी। पांच प्रकार के विज्ञानों का
आलम्बन संचित पदार्थ हैं, क्योंकि उनका वैसा ही आकार देखने में आता
है। संचित पदार्थ अवयव समुदाय से भिन्न कुछ नहीं है। ( क्योंकि ) उनके
अवयवों को पृथक्-पृथक् करने से संचिताकार विज्ञान का अभाव हो जाता है।
अतः संचिताकार विज्ञान बाह्य विषय के विना ही उत्पन्न होता है।

परमाणु संचिताकार विज्ञान का आलम्बन नहीं हो सकते हैं, क्योंकि
परमाणुओं का वह आकार नहीं है। क्योंकि असंचित अवस्था से संचित
अवस्था में परमाणुओं में कोई विशेषता नहीं आती। अतः असंचित के समान
संचित परमाणु भी विज्ञान के आलम्बन नहीं हो सकते।

अन्यस्तु मन्यते। एकैकपरमाणुर् अन्यनिरपेक्षोऽतीन्द्रियो, बहवस्तु
परस्परापेक्षा इन्द्रियग्राह्याः। तेषामपि सापेक्षनिरपेक्षावस्थयोर् आत्मा-
तिशयाभावाद् एकान्तेनेन्द्रियग्राह्यत्वम् अतीन्द्रियत्वं वा। यदि च
परमाणव एव परस्परापेक्षा विज्ञानस्य विषयी भवन्ति, एवं सति योऽयं
घटकुड्याद्याकारभेदो विज्ञाने स न स्यात् परमाणूनाम् अतदाकारत्वात्।
न चान्यनिर्भासस्य विज्ञानस्यान्याकारो विषयो युज्यतेऽतिप्रसङ्गात्।

कुछ लोग ऐसा मानते हैं। एक-एक परमाणु स्वतन्त्ररूप में अतीन्द्रिय हैं,
पर बहुत से परमाणु जब एक दूसरे की अपेक्षा करते हुए स्थित होते हैं, तो
इन्द्रिय ग्राह्य हो जाते हैं। उनके ( परमाणुओं के ) सापेक्ष-निरपेक्ष अवस्थाओं
में कोई विशेषता न आने के कारण या तो वे सर्वथा इन्द्रियग्राह्य होंगे या
अतीन्द्रिय होंगे। यदि परस्पर की अपेक्षा से युक्त परमाणु ही विज्ञान के विषय
हैं, तो विज्ञान में घट, प्राचीर आदि के आकार का भेद होता है, वह नहीं हो
क्योंकि परमाणुओं का तो वह आकार नहीं है। और अन्य प्रकार की प्रतीति
वाले विज्ञान का अन्य आकृतिवाला विषय नहीं हो सकता क्योंकि ऐसा मानने
पर अतिव्याप्ति का दोष आ जायगा।

न च परमाणवः स्तम्भादिवत् परमार्थतः सन्ति, अर्वाङ्मध्यपर-
भागसद्भावात्। तदनभ्युपगमे वा पूर्वदक्षिणापरोत्तरादिदिग्भेदो यः
स परमाणोर्न स्यात्। ततश्च विज्ञानवत् परमाणोरप्यमूर्तत्वमदेशस्थत्वं
च प्रसज्यते। एवं बाह्यार्थाभावाद् विज्ञानमेवार्थाकारमुत्पद्यते, स्वप्न-
विज्ञानवद् इत्यभ्युपेयम्।

स्तंभादि के समान परमाणु परमार्थतः सत् नहीं हो सकते हैं क्योंकि उन्हें आगे पीछे एवं मध्य के भाग होते हैं। यदि ऐसा न माना जाय तो परमाणु का जो पूर्व, दक्षिण पश्चिम एवं उत्तर आदि दिशाभेद है, वह नहीं होगा। ऐसी दशा में विज्ञान के समान परमाणु को भी अमूर्त्तत्व तथा आदेशस्थत्व की प्राप्ति होगी। इस प्रकार बाह्य पदार्थ के अभाव में विज्ञान ही विषय के आकार में स्वप्न विज्ञान के समान, उत्पन्न होता है, ऐसा जानना चाहिए।

**वेदनादयोऽपि नातीतानागतास्तदाकारविज्ञानजनका निरुद्धाजातत्वात्। न च वर्तमाना वर्तमानजनका उत्पद्यमानावस्थायाम् असत्त्वाद् उत्पन्नावस्थायां विज्ञानस्यापि तदाकारेणोत्पन्नत्वान् न किंचित् कर्तव्यमस्तीति। मनोविज्ञानमप्यनालम्बनमेवोत्पद्यते।**

भूत और भविष्यत्कालिक वेदना आदि भी उस आकार के विज्ञान को उत्पन्न नहीं कर सकती हैं, क्योंकि वे या तो नष्ट हैं या उत्पन्न नहीं हैं। जो वर्तमान कालिक वेदनादि हैं, वे वर्तमान कालिक ( विज्ञान ) को नहीं उत्पन्न कर सकती हैं क्योंकि जब वे उत्पन्न हो रही हैं, उस समय तो वे हैं ही नहीं, और जब वे ( उत्पन्न ) हो चुकीं तब विज्ञान भी उस आकार वाला उत्पन्न हो चुका ( अतः ) अब कुछ करने की आवश्यकता नहीं रही। इसलिए मनोविज्ञान भी बिना आलम्बन का ही उत्पन्न होता है।

**अन्यस्त्वाह। असत्यात्मनि मुख्ये धर्मेषु चोपचारो न युज्यते। उपचारो हि त्रिषु भवति, नान्यतमाभावे। मुख्यपदार्थे तत्सदृशेऽन्यस्मिन् विषये तयोश्चसादृश्ये। तद् यथा मुख्येऽग्नौ तत्सदृशे च माणवके तयोश्च साधारणे धर्मे कपिलत्वे तीक्ष्णत्वे वा सत्यग्निर्माणवक इत्युपचारः क्रियते। अत्र ह्यग्निर्माणवक इति जातिर्द्रव्यं वोपचार्यते। उभयथाप्युपचाराभावः। तत्र तावन्न जातेः साधारणं कपिलत्वं तीक्ष्णत्वं वा। न च साधारणधर्माभावे माणवके जातेरुपचारो युज्यतेऽतिप्रसङ्गात्।**

दूसरे ऐसा कहते हैं। मुख्य आत्मा एवं धर्मों के न होने पर उनका उपचार अर्थात् गौण व्यवहार भी नहीं हो सकता है। उपचार तीन अवस्थाओं में हो सकता है। किसी भी एक के अभाव में नहीं हो सकता है। ( वे हैं ) मुख्य पदार्थ, उसके समान दूसरा विषय और उन दोनों का सादृश्य। यथा मुख्य अग्नि, उसके समान ( कान्तिवाला ) बालक तथा उन दोनों का समान धर्म कपिलत्व या तीक्ष्णत्व के होने पर ही 'यह लड़का अग्नि है' ऐसा उपचार किया जाता है। 'यह माणवक अग्नि है' इसमें जाति या द्रव्य का आरोप किया जाता है। दोनों प्रकार से उपचार का अभाव है।



कपिलत्व या तीक्ष्णत्व जाति का साधारण धर्म ( गुण ) नहीं है। साधारण धर्म नहीं होने पर माणवक में जाति का उपचार करना युक्त नहीं क्योंकि ऐसा करने से अतिव्याप्ति हो जायगी।

**अथ अतद्धर्मत्वेऽपि जातेः तीक्ष्णत्वकपिलत्वयोर् जात्यविनाभावित्वान् माणवके जात्युपचारो भविष्यति, जात्यभावेऽपि तीक्ष्णत्वकपिलत्वयोर् माणवके दर्शनाद् अविनाभावित्वमयुक्तम्। अविनाभावित्वे चोपचाराभावोऽग्नाविव माणवकेऽपि जातिसद्भावात्। तस्मान्न माणवके जात्युपचारः संभवति।**

( यदि यह कहा जाय कि ) यद्यपि वह जाति का धर्म नहीं है तो भी तीक्ष्णत्व और कपिलत्व जाति के बिना नहीं रह सकते, अतः माणवक में अग्नि का उपचार होगा। ( क्योंकि ) जाति के न होने पर तीक्ष्णता एवं कपिलत्व माणवक में नहीं देखे जाते हैं। अतः जाति के बिना तीक्ष्णता एवं कपिलत्व नहीं हो सकते, ऐसा मानना युक्त नहीं है। ( यदि ऐसा मान भी लें तो उपचार की सिद्धि नहीं होगी ) क्योंकि अग्नि के समान माणवक में भी जाति का अस्तित्व सिद्ध हो जायगा। अतः माणवक में जाति का आरोप नहीं हो सकता।

**नापि द्रव्योपचारः सामान्यधर्माभावात्। न हि योऽग्नेस्तीक्ष्णो गुणः कपिलो वा स एव माणवके। किं तर्हि? ततोऽन्यः। विशेषस्य स्वाश्रयप्रतिबद्धत्वान्, न विनाग्निगुणेनाग्नेर् माणवके उपचारो युक्तः।**

द्रव्य का भी आरोप नहीं हो सकता क्योंकि उसमें सामान्य धर्म का अभाव है। जो अग्नि का तीक्ष्णत्व या कपिलत्व गुण है, वही माणवक में नहीं है। तब क्या है? उससे भिन्न। प्रत्येक की विशेषता अपने अपने आश्रय में सीमित रहने के कारण अग्नि के गुण के बिना माणवक में अग्नि का उपचार युक्त नहीं।

**अग्निगुणसादृश्याद् युक्त इति चेत्, एवमप्यग्निगुणस्यैव तीक्ष्णस्य कपिलस्य वा माणवकगुणे तीक्ष्णे कपिले वा सादृश्याद् उपचारो युक्तो न तु माणवकेऽग्नेर्, गुणसादृश्येनासंबन्धात्। तस्माद् द्रव्योपचारोऽपि नैव युज्यते।**

( यहां यदि यह कहा जाय कि ) अग्नि के गुण के सादृश्य से ही माणवक मे अग्नि शब्द का उपचार युक्त है, तो भी अग्नि के गुण तीक्ष्णता या कपिलत्व का माणवक के गुण तीक्ष्णता या कपिलत्व में सादृश्य के कारण उपचार का होना संभव है, न कि माणवक में अग्नि का, क्योंकि अग्नि के गुण के सादृश्य के

साथ उसका ( माणवक का ) सम्बन्ध नहीं है। एतदर्थ द्रव्योपचार भी युक्तिसंगत नहीं है।

मुख्योऽपि पदार्थो नास्ति, तत्स्वरूपस्य सर्वज्ञानाभिधानविषयातिक्रान्तत्वात्। प्रधाने हि गुणरूपेणैव ज्ञानाभिधाने प्रवर्तते तत्स्वरूपासंस्पर्शात्, अन्यथा च गुणवैयर्थ्यप्रसङ्गः। न हि ज्ञानाभिधानव्यतिरिक्तोऽन्यः पदार्थस्वरूपपरिच्छित्त्युपायोऽस्तीत्यतः प्रधानस्वरूपविषयज्ञानाभिधानाभावान् नैव मुख्यः पदार्थोऽस्तीत्यवगन्तव्यम्। एवं यावच्छब्दे संबन्धाभावाज् ज्ञानाभिधानाभाव एवं चाभिधानाभिधेयाभावान् नैव मुख्यः पदार्थोऽस्ति। अपि च सर्व एवायं गौण एव न मुख्योऽस्ति। गौणो हि नाम यो यत्राविद्यमानेन रूपेण प्रवर्तते। सर्वश्च शब्दः प्रधानेऽविद्यमानेनैव गुणरूपेण प्रवर्तते, अतो मुख्यो नास्त्येव। तत्र यदुक्तं असत्यात्मनि मुख्ये धर्मेषु चोपचारो न युक्त इति तदयुक्तम्।

मुख्य पदार्थ भी नहीं है, क्योंकि उसका स्वरूप सभी प्रकार के ज्ञानों तथा शब्दों के विषय से परे है। मुख्यपदार्थ में गुण रूप से ही ज्ञान तथा शब्द की प्रवृत्ति होती है, क्योंकि उसके स्वरूप की प्रतीति ( ज्ञान तथा शब्द द्वारा ) नहीं होती है, अन्यथा गुण की व्यर्थता की प्राप्ति हो जायगी। ज्ञान और शब्द के अतिरिक्त पदार्थ के स्वरूप के ज्ञान का कोई अन्य साधन नहीं है, अतः प्रधान के स्वरूप के विषय में ज्ञान और शब्द के न होने से मुख्यपदार्थ नहीं है, ऐसा जानना चाहिए। इस प्रकार शब्द में सम्बन्ध न होने से ज्ञान और शब्द का अभाव है और शब्द एवं अर्थ के न होने से मुख्य पदार्थ नहीं है। पुनः सभी ( शब्द व्यवहार ) गौण हैं, मुख्य नहीं हैं। गौण उसे कहते हैं, जो अविद्यमान रूप से प्रवृत्त होता है। सभी शब्द प्रधान में ( मुख्य पदार्थ में ) अविद्यमान गुण रूप से प्रवृत्त होते हैं, अतः मुख्य पदार्थ नहीं है। एतदर्थ जो यह कहा गया है कि आत्मा तथा मुख्य धर्मों के न रहने पर उपचार भी नहीं हो सकता, यह युक्त नहीं है।

विज्ञानपरिणामः कतिभेद इति न ज्ञायते। अतस्तत्प्रभेदोपदर्शनार्थमाह—

**—परिणामः स च त्रिधा ॥ १ ॥**

विज्ञान के परिणाम के कितने भेद हैं, यह नहीं ज्ञात है। अतः उसके प्रभेद को दर्शाने के लिए कहा गया है—

'वह परिणाम तीन प्रकार का है' ॥ १ ॥



( २ )

यत्रात्माद्युपचारो धर्मोपचारश्च, स पुनर्हेतुभावेन फलभावेन च विद्यते[1]। तत्र हेतुपरिणामो याऽलयविज्ञाने विपाकनिःष्यन्दवासनापरिपुष्टिः। फलपरिणामः पुनर्विपाकवासनावृत्तिलाभाद् आलयविज्ञानस्य पूर्वकर्माक्षेपपरिसमाप्तौ या निकायसभागान्तरेष्वभिनिर्वृत्तिः, निःष्यन्दवासनावृत्तिलाभाच्च या प्रवृत्तिविज्ञानानां क्लिष्टस्य च मनस आलयविज्ञानाद् अभिनिर्वृत्तिः। तत्र प्रवृत्तिविज्ञानं कुशलाकुशलम् आलयविज्ञाने विपाकवासनां निःष्यन्दवासनां चाधत्ते। अव्याकृतं क्लिष्टं च मनो निःष्यन्दवासनामेव।

( २ )

जो आत्म उपचार और धर्म-उपचार है, वह हेतु और फल रूप से विद्यमान है। हेतु परिणाम आलयविज्ञान में विपाकवासना तथा निष्यन्दवासना की परिपुष्टि है। फलपरिणाम विपाकवासना के वृत्ति लाभ से आलयविज्ञान के पूर्व कर्माक्षेप की समाप्ति हो जाने पर अन्य शरीर के लिए प्रवृत्ति तथा निष्यन्दवासना के वृत्तिलाभ से प्रवृत्तिविज्ञान और क्लिष्ट मन की आलयविज्ञान से निर्वृत्ति है। कुशल तथा अकुशल प्रवृत्तिविज्ञान आलयविज्ञान में विपाकवासना एवं निष्यन्दवासना को उत्पन्न करता है। अव्याकृत क्लिष्ट मन निष्यन्दवासना को ही उत्पन्न करता है।

योऽसौ त्रिविधः परिणाम उक्तोऽसावपि न ज्ञायते। अतस्तद्भेदप्रदर्शनार्थमाह—

**विपाको मननाख्यश्च विज्ञप्तिर्विषयस्य च।**

तीन प्रकार का जो परिणाम कहा गया, वह भी ( सम्यक् रूप से ) ज्ञात नहीं है। अतः उसके भेद को दर्शाने के लिए कहते हैं—

'विपाक मनन और विषयविज्ञप्ति'—

इति। स एष त्रिविधः परिणामो विपाकाख्यो मननाख्यो विषयविज्ञप्त्याख्यश्च। तत्र कुशलाकुशलकर्मवासनापरिपाकवशाद् यथाक्षेपं फलाभिनिर्वृत्तिर्विपाकः।

यही तीन परिणाम हैं, जिन्हें विपाक, मनन और विषयविज्ञप्ति कहते हैं। उनमें कुशल एवं अकुशल कर्मवासना के परिपाक होने से आक्षेप के अनुसार जो फल की सिद्धि है, वही विपाक है।

---

1. C. भिद्यते।

क्लिष्टं मनो नित्यं मननात्मकत्वात् मननाख्यम् ।

रूपादिविषयप्रत्यवभासत्वात् चक्षुरादिविज्ञानं षट्प्रकारमपि विषय-विज्ञप्तिः ।

क्लिष्ट मन सदा मननात्मक होने से मनन कहलाता है ।

रूपादि विषयों के प्रकाशक होने के कारण चक्षुविज्ञान आदि छः प्रकार के विज्ञान विषय विज्ञप्ति कहलाते हैं ।

तत्स्वरूपनिर्देशमन्तरेण न तत् प्रतीयते, इत्यतो यस्य यत्स्वरूपं तद् यथाक्रमं प्रदर्शयन्नाह—

**तत्रालयाख्यं विज्ञानं विपाकः सर्वबीजकम् ॥ २ ॥**

जिसका जो स्वरूप है, उसके निर्देश विना ( स्वरूप की ) प्रतीति नहीं होती है, एतदर्थ जिसका जो स्वरूप है, उसको यथाक्रम दर्शाते हुए कहा गया है :—

उनमें आलयविज्ञान जो सबका बीज है, उसे विपाक कहते हैं ॥ २ ॥

इति । तत्रेति योऽयमनन्तरोक्तः त्रिविधः परिणामः । आलयाख्य-मित्यालयविज्ञानसंज्ञकं यद्विज्ञानं स विपाकपरिणामः । तच्च[1] सर्व-सांक्लेशिकधर्मबीजस्थानत्वाद् आलयः । आलयः स्थानमिति पर्यायौ । अथ वालीयन्ते उपनिबध्यन्तेऽस्मिन् सर्वधर्माः कार्यभावेन । यद्वालीयते उपनिबध्यते कारणभावेन सर्वधर्मेष्वित्यालयः । विजानातीति विज्ञानम् । सर्वधातुगतियोनिजातिषु कुशलाकुशलकर्मविपाकत्वाद् विपाकः । सर्व-धर्मबीजाश्रयत्वात् सर्वबीजकम् ।

उनमें अर्थात् अभी कहे गये तीन प्रकार के परिणामों में । आलयनामक अर्थात् आलयविज्ञान नामक जो विज्ञान है, वही विपाकपरिणाम है । सभी सांक्लेशिक धर्मों के बीज का स्थान होने के कारण यह आलय कहलाता है । आलय तथा स्थानपर्यायवाची शब्द हैं । अथवा जिसमें सभी धर्म कार्यभाव से उपनिबद्ध होते हैं ( इसलिए वह आलय कहलाता है ) । या जो सभी धर्मों में कारण भाव से उपनिबद्ध होता है, उसे आलय कहते हैं । जो जानता है, उसे विज्ञान कहते हैं । सभी धातु गति योनि और जातियों में कुशल एवं अकुशल कर्म का विपाक होने के कारण विपाक कहलाता है । सभी धर्मों के बीज का आश्रय होने से सब का बीज ( सर्वबीजक ) कहलाता है ।

१. A. तत्र ।



( २ )

यदि प्रवृत्तिविज्ञानव्यतिरिक्तम् आलयविज्ञानमस्ति ततोऽस्यालम्बनम् आकारो च[1] वक्तव्यः । न हि निरालम्बनं निराकारं वा विज्ञानं युज्यते ।

( ३ )

यदि प्रवृत्ति विज्ञान से भिन्न आलयविज्ञान है, तब इसका आलम्बन ( विषय ) या आकार का कथन करना चाहिए क्योंकि आलम्बन या आकार रहित विज्ञान नहीं हो सकता है ।

नैव तन् निरालम्बनं निराकारं वेष्यते । किं तर्ह्यपरिच्छिन्नालम्बना-कारम् । किं कारणम् ? यस्माद् आलयविज्ञानं द्विधा प्रवर्तते । अध्यात्मम् उपादानविज्ञप्तितो, बहिर्धोऽपरिच्छिन्नाकारभाजनविज्ञप्तिश्च । तत्राध्या-त्ममुपादानं परिकल्पितस्वभावाभिनिवेशवासना, साधिष्ठानम् इन्द्रिय-रूपं नाम च । अस्यालम्बनस्यातिसूक्ष्मत्वात्—

**'असंविदितकोपादिस्थानविज्ञप्तिकं च तत्' ।**

( इसका उत्तर है कि ) निरालम्बन या निराकार आलयविज्ञान अभीष्ट नहीं है । अपितु अपरिच्छिन्न आलम्बन तथा आकारवाला विज्ञान इष्ट है । इसका क्या कारण है ? क्योंकि आलयविज्ञान दो प्रकार से प्रवृत्त होता है । आध्यात्मतः उपादानविज्ञप्ति के रूप में तथा बाह्यतः अपरिच्छिन्न-आकार-भाजनविज्ञप्ति के रूप में । आध्यात्मिक-उपादानविज्ञप्ति परिकल्पित स्वभाव के आग्रह की वासना है, जो अधिष्ठान सहित इन्द्रियरूप कहलाती है । इसका आलम्बन अति सूक्ष्म है । इसलिए यह—

'असंविदित उपादि स्थानविज्ञप्ति कहलाती है' ।

असंविदितक उपादिर्यस्मिन् असंविदितकावस्थानविज्ञप्तिर्यस्मिन् तदालयविज्ञानम्, असंविदितकोपादिस्थानविज्ञप्तिकम् । उपादानम् उपादिः । स पुनरात्मादिविकल्पवासना रूपादिधर्मविकल्पवासना च । तत्सद्भावादालयविज्ञानेनात्मादिविकल्पो रूपादिविकल्पश्च कार्यत्वेनो-पात्त इति । तद्वासनात्मादिविकल्पानां रूपादिविकल्पानां चोपादिरित्यु-च्यते । सोऽस्मिन् इदं तदिति प्रतिसंवेदनाकारेणासंविदित इत्यतस्तद-संविदितकोपादीत्युच्यते ।

जिसमें उपादि का ज्ञान नहीं होता है, जिसमें स्थानविज्ञप्ति असंविदित है, वह असंविदित उपादि स्थानविज्ञप्ति कहलाता है । उपादान को ही उपादि कहते हैं । वह आत्मादिविकल्पवासना तथा रूपादि धर्मविकल्पवासना है ।

१. A. वा ।

उसके होने से आलयविज्ञान में आत्मादिविकल्प और रूपादिविकल्प कार्यरूप में गृहीत होते हैं। उसकी वासना आत्मादिविकल्पों तथा रूपादिविकल्पों की उपादि है। वह इसमें 'यह है' इस प्रकार प्रतिसंवेदन के रूप में नहीं जाना जाता है, इसलिए उसे असंविदित उपादि कहते हैं।

**आश्रयोपादानं चोपादिः। आश्रय आत्मभावः साधिष्ठानम् इन्द्रियरूपं नाम च। तस्य पुनर्यदुपादानम् उपगमनम् एकयोगक्षेमत्वेन तदुपादिः। तत्र कामरूपधात्वोर्द्वयोर्नामरूपयोर् उपादानम्। आरूप्यधातौ तु रूपवीतरागत्वाद्रूपविपाकानभिनिर्वृत्तेर् नामोपादानमेव। किं तु वासनावस्थमेव तत्र रूपं न विपाकावस्थम्। तत्पुनरुपादानम् इदं तया प्रतिसंवेदयितुमशक्यमित्यतोऽसंविदित इत्युच्यते।**

आश्रय के उपादान को उपादि कहते हैं। आश्रय आत्मभाव को कहते हैं। वह अधिष्ठान सहित इन्द्रिय रूप तथा नाम है। उसका उपादान एक योगक्षेम वाला होने के कारण उपगमन है, वह उपादि कहलाता है। उनमें कामधातु एवं रूपधातु दोनों में नाम और रूप का उपादान है। आरूप्यधातु में रूप से वीतराग होने के कारण रूपविपाक की अभिनिर्वृत्ति न होने से नाम का ही उपादान है। किन्तु वहां रूपवासना की अवस्था में रहता है, विपाकावस्था में नहीं। वह उपादान 'ऐसा है' इस रूप में बतलाया नहीं जा सकता, इसलिए असंविदित कहलाता है।

**स्थानविज्ञप्तिर्भाजनलोकसंनिवेशविज्ञप्तिः। साप्यपरिच्छिन्नालम्बनाकारप्रवृत्तत्वाद् असंविदितेत्युच्यते।**

भाजन-लोक-सन्निवेश-विज्ञप्ति को स्थानविज्ञप्ति कहते हैं। वह भी अपरिच्छिन्न आलम्बन और आकार में प्रवृत्त होने से असंविदित कहलाती है।

**कथं विज्ञानम् अपरिच्छिन्नालम्बनाकारं भविष्यतीति? अन्यविज्ञानवादिनामपि निरोधसमापत्त्याद्यवस्थासु तुल्यमेतत्! न च निरोधसमापत्त्याद्यवस्थासु विज्ञानं नैवास्तीति शक्यते प्रतिपत्तुम्। युक्तिविरोधात् सूत्रविरोधाच्चेति।**

(प्रश्न यह होता है कि) विज्ञान अपरिच्छिन्न आलम्बन और आकार वाला कैसे हो सकता है? (इसका उत्तर यह है कि) अन्य विज्ञानवादी भी निरोधसमापत्ति आदि अवस्थाओं में ऐसा ही मानते हैं। निरोधसमापत्ति अवस्था में विज्ञान नहीं है, ऐसा नहीं कह सकते हैं। (ऐसा कहना) युक्ति एवं सूत्र का विरोध करना है।



**तत्रालयाख्यं विज्ञानमित्युक्तं विज्ञानं चावश्यं चैत्तैः संप्रयुक्तमित्यतो वक्तव्यं कतमैः कतिभिश्च तच्चैत्तैः[1] संप्रयुज्यते? तथा किं तैः सर्वदा संप्रयुज्यते, उत नेत्यत आह—**

**सदा स्पर्शमनस्कारवित् संज्ञा चेतनान्वितम्॥ ३॥**

जब आलय को विज्ञान कहा जाता है, तो वह अवश्य चैत्तों से सम्प्रयुक्त होगा, अतः यह कहना चाहिए कि किन और कितने चैत्तों से सम्प्रयुक्त रहता है तथा वह क्या उनसे सर्वदा सम्प्रयुक्त रहता है या नहीं, इसे कहा गया है—

'स्पर्श मनस्कार वेदना संज्ञा और चेतना से सर्वदा युक्त रहता है'॥ ३॥

**इति। सदेति यावदालयविज्ञानं तावदेभिः स्पर्शमनस्कारवेदनासंज्ञाचेतनाख्यैः पञ्चभिः सर्वत्रगैर्धर्मैरन्वितम्।**

'सदा' का अर्थ यह है कि जब तक आलयविज्ञान है, तब तक इन स्पर्श मनस्कार वेदना संज्ञा चेतना नामक पाँचों सर्वत्र गामी धर्मों से युक्त रहता है।

**वेदना वित्।**

**तत्र स्पर्शस्त्रिकसंनिपाते इन्द्रियविकारपरिच्छेदः वेदनासंनिश्रयकर्मकः। इन्द्रियविषयविज्ञानानि त्रीण्येव त्रिकम्। तस्य कार्यकारणभावेन समवस्थानं त्रिकसंनिपातः। तस्मिन् सति तत्समकालमेवेन्द्रियस्य सुखदुःखादिवेदनानुकूलो यो विकारस्तेन सदृशो विषयस्य सुखादिवेदनीयाकारपरिच्छेदो यः स स्पर्शः। इन्द्रियं पुनर्येन विशेषेण सुखदुःखादि वेदनीयाकारपरिच्छेदो यः स स्पर्शः। इन्द्रियं पुनर्येन विशेषेण सुखदुःखादिहेतुत्वं प्रतिपद्यते स तस्य विकारः। स्पर्शः पुनरिन्द्रियविकारसादृश्येनेन्द्रियं स्पृशतीन्द्रियेण वा स्पृश्यत इति स्पर्श उच्यते। अतएव विषयविकारपरिच्छेदात्मकोऽपीन्द्रियविकारपरिच्छेद उक्तः। वेदनासंनिश्रयत्वमस्य कर्म। एवं ह्युक्तं सूत्रे सुखवेदनीयं स्पर्शं प्रतीत्योत्पद्यते सुखं वेदितमिति विस्तरः।**

वेदना को वित् कहते हैं।

त्रिक सन्निपात में जो इन्द्रियों के विकारों का, परिच्छेद है, इसका वेदना सन्निश्रय कार्य है, उसे स्पर्श कहते हैं। इन्द्रिय विषय और विज्ञान, इन तीनों को त्रिक कहते हैं। उनका कार्यकारणभाव से समवस्थान त्रिकसन्निपात है। उसके होने पर उसी समय में जो इन्द्रिय का सुख-दुःखादि वेदनानुकूल विकार है, उसके

---

१. A. सदा।

समान विषय के सुखादि वेदनाओं को उत्पन्न करने वाले आकार का जो परिच्छेद है, वह स्पर्श कहलाता है, जिस विशेषता से इन्द्रिय सुख-दुःखादि का कारण बनती है, वह उसका विकार है । इन्द्रिय विकार के सादृश्य से इन्द्रिय को स्पर्श करता है या इन्द्रिय के द्वारा उसका स्पर्श होता है, इसलिए वह स्पर्श कहलाता है । इसलिए विषयविकारपरिच्छेदात्मक होते हुए भी उसे इन्द्रियविकारपरिच्छेद कहा गया है । वेदना सन्निश्रयत्व इसका कार्य है । इस प्रकार सूत्र में कहा गया है कि सुखवेदनीय स्पर्श के कारण सुखवेदना उत्पन्न होती है, यह विस्तार है ।

**मनस्कारश्चेतस आभोगः । आभुजनमाभोगः । आलम्बने येन चित्तमभिमुखीक्रियते । स पुनरालम्बने चित्तधारणकर्मा । चित्तधारणं पुनस्तत्रैवालम्बने पुनः पुनश्चित्तस्यावर्जनम् । एतच्च कर्म चित्तसंततेरालम्बननियमेन विशिष्टं मनस्कारमधिकृत्योक्तं, न तु यः प्रतिचित्तक्षणं, तस्य हि प्रतिक्षणमेव व्यापारो न क्षणान्तरे ।**

मनस्कार चित्त के आभोग को कहते हैं, आभोग का अर्थ आभुजन या उस दिशा में प्रवृत्त होना है । इसके द्वारा चित्त आलम्बन की ओर अभिमुख किया जाता है । आलम्बन में चित्त को धारण करना इसका काम है । चित्त धारण का अर्थ है उसी आलम्बन में पुनः पुनः चित्त को आकृष्ट करना । यह कर्म चित्तसन्तति के आलम्बननियम के प्रसंग में विशिष्ट मनस्कार के विषय में कहा गया है, उस मनस्कार के विषय में नहीं जो एक एक चित्तक्षण में होता है क्योंकि उसका कार्य तो एक क्षण भर ही रहता है, दूसरे क्षण नहीं ।

**वेदना अनुभवस्वभावा । सा पुनर्विषयस्याह्लादकपरितापकतदुभयाकारविविक्तस्वरूपसाक्षात्करणभेदात् त्रिधा भवति, सुखा, दुःखा, अदुःखासुखा च ।**

वेदना अनुभव स्वभाव वाली होती है । वह विषय के आह्लादक परितापक तथा उन दोनों से भिन्न स्वरूप के साक्षात्कार के भेद से तीन प्रकार की होती हैं—सुखा वेदना, दुःखा वेदना तथा अदुःखा असुखा वेदना ।

**एवं त्वन्ये मन्यन्ते । शुभाशुभानां कर्मणां फलविपाकं प्रत्यनुभवन्त्यनेनेत्यनुभवः । तत्र शुभानां कर्मणां सुखोऽनुभवः फलविपाकः । अशुभानां दुःखः । उभयेषामदुःखासुखः । अत्र चालयविज्ञानमेव शुभाशुभकर्मविपाकः । तत्संप्रयुक्तैवोपेक्षा परमार्थतः शुभाशुभानां कर्मणां फलविपाकः । सुखदुःखयोस्तु कुशलाकुशलकर्मविपाकजत्वाद् विपाकोपचारः । तत्र सुखोऽनुभवः यस्मिन्नुत्पन्नेऽवियोगेच्छानिरुद्धे च संयोगेच्छा**



**जायते । दुःखोऽनुभवः यस्मिन्नुत्पन्ने वियोगेच्छानिरुद्धे च पुनरसंयोगेच्छा । अदुःखासुखो यस्मिन्नुत्पन्ने निरुद्धे चोभयं न जायते ।**

ऐसा दूसरे मानते हैं । जिनके द्वारा शुभ और अशुभ कर्मों के फल का अनुभव किया जाता हैं, वह अनुभव है । उनमें शुभ कर्मों का फल सुख अनुभव है । अशुभ कर्मों का फल दुःख अनुभव है । शुभ एवं अशुभ कर्मों के फल से अदुःख असुख अनुभव होता है । आलयविज्ञान ही शुभ एवं अशुभ कर्मों का विपाक है । उससे सम्प्रयुक्त उपेक्षा ही वस्तुतः शुभाशुभ कर्मों का फल है । सुख दुःख कुशल एवं अकुशल कर्म के विपाक से उत्पन्न होते हैं, इसलिए उनमें विपाक शब्द का व्यवहार होता है । सुख अनुभव वह है, जिसके उत्पन्न होने से उससे वियोग की इच्छा न हो तथा जिसके नष्ट होने से संयोग की इच्छा हो । दुःख अनुभव वह है, जिसके उत्पन्न होने पर उससे वियोग की इच्छा हो तथा जिसके नष्ट होने पर उससे संयोग की इच्छा न हो । अदुःख असुख अनुभव वह है. जिसके उत्पन्न होने तथा निरुद्ध होने पर अवियोग तथा संयोग दोनों की इच्छा नहीं होती है ।

**संज्ञा विषयनिमित्तोद्ग्रहणम् । विषय आलम्बनम् । निमित्तं तद्विशेषो नीलपीताद्यालम्बनव्यवस्थाकारणम् । तस्योद्ग्रहणं निरूपणं नीलमेतन् न पीतमिति ।**

विषय के निमित्त को ग्रहण करना संज्ञा है । विषय को आलम्बन कहते हैं । उसकी विशेषता अर्थात् नील-पीतादि जो आलम्बन की व्यवस्था के कारण हैं, वे ही निमित्त हैं । उसका उद्ग्रहण अर्थात् निरूपण कि यह नील है, पीत नहीं है—( संज्ञा कहलाती है ) ।

**चेतना चित्ताभिसंस्कारो मनसश्चेष्टा । यस्यां सत्यामालम्बनं प्रति चेतसः प्रस्पन्द इव भवति अयस्कान्तवशादयःप्रस्पन्दवत् ।**

चेतना चित्त के अभिसंस्कार अर्थात् मन की चेष्टा को कहते हैं । जिसके होने पर आलम्बन के प्रति चित्त का झुकाव हो जाता है यथा अयस्कान्त के प्रति लोहे का ।

**वेदना त्रिविधा सुखा दुःखा अदुःखासुखा च । धर्माश्चतुःप्रकाराः—कुशला अकुशला अनिवृताव्याकृता निवृताव्याकृताश्च ।**

वेदना तीन प्रकार की होती है—सुखात्मक दुःखात्मक तथा अदुःखासुखात्मक । धर्म चार प्रकार के होते हैं—कुशल, अकुशल, अनिवृताव्याकृत तथा निवृताव्याकृत ।

( ४ )

तत्रालयविज्ञाने विदित सामान्योपदेशेन न विज्ञायते, तिसृणां वेदनानां कतमा वेदना। तथा तदपि किं कुशलमकुशलमनिवृताव्याकृतं निवृताव्याकृतमिति न विज्ञायत इत्यत आह—

**उपेक्षा वेदना तत्रानिवृताव्याकृतं च तत्।**

( ४ )

आलय विज्ञान में सामान्यतया वेदना का कथन होने से यह नहीं ज्ञात होता है कि ( उक्त ) तीन वेदनाओं में वहां कौन सी वेदना रहती है। वह आलयविज्ञान भी कुशल अकुशल अनिवृताव्याकृत या निवृताव्याकृत है—यह भी नहीं ज्ञात है, अतः कहा गया है—

वहां उपेक्षा वेदना रहती है, और वह अनिवृताव्याकृत है।

तत्रेत्यालयविज्ञानमेव प्रकृतत्वात्संबध्यते। उपेक्षैवालयविज्ञाने वेदना न सुखा न दुःखा, तयोः परिच्छिन्नालम्बनाकारत्वात्। रागद्वेषानुशयित्वाच्च, अनिवृताव्याकृतं च तत्। आलयविज्ञानमिति प्रकृतम्। तत्रानिवृतग्रहणं निवृतव्यवच्छेदार्थम्। अव्याकृतग्रहणं कुशलाकुशलव्यवच्छेदार्थम्। मनोभूमिकैरागन्तुकैरुपक्लेशैरनावृतत्वादनिवृतम्। विपाकत्वाद्विपाकं प्रतिकुशलाकुशलत्वेनाव्याकरणादव्याकृतम्।

**तथा स्पर्शादयः—·········।**

वहां 'यह' सर्वनाम प्रसंगवश आलयविज्ञान का ही परामर्शक है। उपेक्षा वेदना ही आलयविज्ञान में रहती है, सुख या दुःख वेदना नहीं क्योंकि वे दोनों परिच्छिन्न आलम्बन और आकारवाली हैं। राग-द्वेष से युक्त होने के कारण वह अनिवृताव्याकृत है। 'वह'—इस शब्द से आलयविज्ञान का ग्रहण प्रकरणवश है। वहां अनिवृत का ग्रहण निवृत के व्यवच्छेद के लिए है। अव्याकृत का ग्रहण कुशल एवं अकुशल के निराकरण के लिए है। मन में होने वाले आगन्तुक उपक्लेशों से आवृत न होने के कारण वह अनिवृत है। विपाक होने के कारण विपाक है। कुशल या अकुशल के रूप में नहीं कहे जाने के कारण अव्याकृत है।

'तथा स्पर्शादि'··············।

यथा आलयविज्ञानमेकान्तेन विपाकोऽपरिच्छिन्नालम्बनाकारं सदा स्पर्शादिभिरन्वितं, तत्र चोपेक्षैव वेदनाऽनिवृताव्याकृतं च; तथा स्पर्शादयोऽप्येकान्तेन विपाका एवापरिच्छिन्नालम्बनाकाराश्च। आत्मानं हित्वा इतरैश्चतुर्भिरालयविज्ञानेन च नित्यमनुगतास्तेषु चोपेक्षैव वेदना



अनिवृताव्याकृताश्चालयविज्ञानवत्। न हि विपाकेन संप्रयुक्तानामविपाकत्वमपरिच्छिन्नालम्बनाकारेण च परिच्छिन्नालम्बनाकारत्वं संभवति। एवमन्यत्रापि वाच्यम्।

यथा आलयविज्ञान अपरिच्छिन्न आलम्बन और आकार वाला एकान्ततः विपाक है तथा सर्वदा स्पर्शादि से युक्त रहता है, वहां उपेक्षा वेदना ही रहती है तथा वह अनिवृताव्याकृत है, वैसे ही स्पर्शादि भी एकान्ततः विपाक हैं और अपरिच्छिन्न आलम्बन और आकार वाले हैं। अपने-अपने को छोड़कर, अन्य चारों से तथा आलयविज्ञान से वे नित्य अनुगत हैं और उनमें उपेक्षा वेदना ही रहती है और वे ( स्पर्शादि ) आलयविज्ञान के समान अनिवृताव्याकृत हैं। विपाक से सम्प्रयुक्त वस्तु अविपाक नहीं हो सकते तथा अपरिच्छिन्न आलम्बन और आकार से युक्त विज्ञानों का परिच्छिन्न आलम्बन और आकारवाला होना संभव नहीं है। ऐसा ही अन्यत्र भी समझना चाहिए।

किं पुनस्तदालयविज्ञानमेकमभिन्नमासंसारमनुवर्तते उत संतानेन? न हि तदेकमभिन्नमनुवर्तते क्षणिकत्वात्। किं तर्हि?

**—तच्च वर्तते स्रोतसौघवत् ॥ ४ ॥**

( अब यहां प्रश्न उत्पन्न होता है ) क्या एक ही आलयविज्ञान अभिन्न रूप से जब तक संसार है तब तक चलता रहता है या प्रवाह के रूप में। वह एक ही अभिन्न रूप से नहीं चलता है, क्षणिक होने के कारण। तब क्या?

'वह प्रवाह के रूप में प्रवृत्त होता रहता है' ॥ ४ ॥

तच्चेत्यालयविज्ञानमेव संबध्यते। तत्र स्रोतो हेतुफलयोर्नैरन्तर्येण प्रवृत्तिः। उदकसमूहस्य पूर्वापरभागाविच्छेदेन प्रवाह ओघ इत्युच्यते। यथा ह्योघस्तृणकाष्ठगोमयादीनाकर्षयन्गच्छति, एवमालयविज्ञानमपि पुण्यापुण्यानेञ्ज्यकर्मवासनानुगतं स्पर्शमनस्कारादीनाकर्षयत्स्रोतसासंसारमव्युपरतं प्रवर्तत इति।

इस 'तत्' शब्द से आलयविज्ञान का सम्बन्ध है। कारण और कार्य की निरन्तर प्रवृत्ति ही प्रवाह है। जलराशि के पूर्व और अपरभाग के अव्यवच्छिन्न प्रवाह को ओघ कहते हैं। जिस प्रकार ओघ तृण काष्ठगोमयादि को लेते हुए चलता है, उसी प्रकार आलयविज्ञान कुशल, अकुशल तथा आनेञ्ज कर्मवासना से अनुगत हो स्पर्श मनस्कारादि को लेते हुए स्रोत के समान संसार की स्थिति पर्यन्त प्रवृत्त होता रहता है।

( ५ )

**तस्यैवं स्रोतसा प्रवृत्तस्य कस्यामवस्थायां व्यावृत्तिरित्याह—**

**तस्य व्यावृत्तिरर्हत्वे............ ।**

( ५ )

उस स्रोत के समान प्रवृत्त आलयविज्ञान की व्यावृत्ति किस अवस्था में होती है, ( इसको प्रकाशित करते हुए ) कहा गया है—

'उसकी व्यावृत्ति अर्हत्व की अवस्था में होती है'।

**किं पुनरर्हत्वं यद्योगादर्हन्नित्युच्यते ? कस्य पुनर्योगादर्हन्नित्युच्यते ? क्षयज्ञानानुत्पादज्ञानलाभात् । तस्यां ह्यवस्थायामालयविज्ञानाश्रितदौष्ठुल्यनिरवशेषप्रहाणादालयविज्ञानं व्यावृत्तं भवति । सैव चार्हदवस्था ।**

पुनः वह अर्हत्व क्या है, जिसके योग से कोई अर्हत् कहलाता है ? किस गुण के योग से वह अर्हत् कहलाता है ? क्षय ज्ञान से तथा अनुत्पत्ति ज्ञान के लाभ से ( वह अर्हत् कहलाता है )। उस अवस्था में आलय विज्ञान में स्थित सभी दौष्ठुल्यों का ( कर्मबीजों का ) निरवशेष प्रहाण हो जाने से आलयविज्ञान की व्यावृत्ति हो जाती है। वही अर्हत् की अवस्था है।

**उक्त सविभागो[1] विपाकपरिणामः । इदानीं मननाख्यं द्वितीयं परिणाममाह-'तदाश्रित्य प्रवर्तत' इति विस्तरः। तत्र यथा चक्षुरादिविज्ञानानां चक्षुरादय आश्रयत्वेन रूपादयश्चालम्बनत्वेन प्रसिद्धाः, नैवं क्लिष्टस्य मनस आश्रय आलम्बनं वा प्रसिद्धम् । न च विज्ञानमाश्रयालम्बननिरपेक्षं युज्यत इत्यतः क्लिष्टस्य मनस आश्रयालम्बनप्रतिपादनार्थं निरुक्तिप्रतिपादनार्थं चाह—**

विस्तारपूर्वक विपाकपरिणाम के सम्बन्ध में कह दिया गया। अब मनन नामक द्वितीय परिणाम के सम्बन्ध में कहा जाता है—'उसके आश्रय से प्रवृत्त होता है', यह विस्तार है। उनमें जैसे चक्षुविज्ञान आदि का चक्षु आदि आश्रय तथा रूपादि आलम्बन के रूप में प्रसिद्ध हैं, उस प्रकार क्लिष्ट मन का आश्रय एवं आलम्बन प्रसिद्ध नहीं है। विज्ञान आश्रय एवं आलम्बन से निरपेक्ष होकर नहीं रह सकता है, एतदर्थ क्लिष्ट मन के आश्रय एवं आलम्बन के प्रतिपादन के लिए तथा उसके निर्वचन के लिए कहते हैं :—

**—तदाश्रित्य प्रवर्तते ।**

**तदालम्बं मनोनाम विज्ञानं मननात्मकम् ॥ ५ ॥**

1. सविभङ्गे ।



उसी के आश्रय से यह प्रवृत्त होता है। उस पर आलम्बित होकर मननात्मक मनोविज्ञान उत्पन्न होता है ॥ ५ ॥

**तदाश्रित्य प्रवर्तत इति तच्छब्देनालयविज्ञानमभिसंबध्यते । तद्वासनाश्रयो ह्यालयविज्ञानमतस्तदाश्रित्य प्रवर्तते संतानेनोत्पद्यत इत्यर्थः । अथ वा यस्मिन्धातौ भूमौ वालयविज्ञानं विपाकस्तदपि क्लिष्टं मनस्तद्धातुकं तद्भूमिकं चेति तत्प्रतिबद्धवृत्तित्वात्तदाश्रित्य प्रवर्तते । तदालम्बमिति, आलयविज्ञानालम्बनमेव; सत्कायदृष्ट्यादिभिः संप्रयोगादहं ममेत्यालय-विज्ञानालम्बनत्वात् ।**

उसके आश्रय से प्रवृत्त होता है, इस वाक्य में 'तत्' शब्द से आलय विज्ञान का सम्बन्ध है। उस मन की वासना का आश्रय आलय विज्ञान है, अतः उसके आश्रय एवं प्रवाह से मननात्मक मनोविज्ञान प्रवृत्त होता है। अथवा जिस धातु या भूमि में आलयविज्ञान विपाक है, वह क्लिष्ट मन भी उस धातु एवं भूमि वाला है, अतः उससे प्रतिबद्धवृत्ति वाला होने के कारण उसके आश्रय से प्रवृत्त होता है। 'उसका आश्रय लेकर' का अर्थ है—आलयविज्ञान का आश्रय लेकर। क्योंकि सत्कायदृष्टि आदि के सम्प्रयोग से 'अहं', 'मम' इस रूप में आलयविज्ञान का आलम्बन लेकर मन ( प्रवृत्त होता है )।

**कथं पुनर्यत एव चित्तादुत्पद्यते तदेवालम्बनं भवति । यथा तदनिच्छतां केषांचित्कस्यांचिदवस्थायाम् यत एव चित्तान्मनोविज्ञानमुत्पद्यते तदालम्बनमेव तदुत्पद्यते ।**

पुनः ( यह प्रश्न होता है कि ) जिस चित्त से वह उत्पन्न होता है, वही उसका आलम्बन कैसे होता है ? ( इसका उत्तर है ) जैसा कि उसको ( आलय विज्ञान को ) न मानने वाले कुछ दार्शनिकों के विचार में किसी ( विशेष ) अवस्था में जिस चित्त से मनोविज्ञान उत्पन्न होता है, ( वह विज्ञान ) उसी चित्त के आलम्बन से ही उत्पन्न होता है।

**मनोनाम विज्ञानमिति । मन इति नाम आख्या यस्य विज्ञानस्य, तदालयविज्ञानमाश्रित्य प्रवर्तते तदालम्बनं च । मनोनाम इत्यनेनालयविज्ञानात्प्रवृत्तिविज्ञानाच्च व्यवच्छिनत्ति । तत्पुनः किंस्वभावमित्याह—'मननात्मकमिति' । एवं मननात्मकत्वान्मन इत्युच्यते नैरुक्तेन विधिना ।**

वह मन नामक विज्ञान है। मन जिसकी आख्या है, उस विज्ञान की उस आलयविज्ञान के आश्रय से प्रवृत्ति होती है तथा वही उसका आलम्बन है।

'वह मन है'—इस पद से आलयविज्ञान तथा प्रवृत्तिविज्ञान से उसका पार्थक्य दिखलाया जाता है। पुनः उसका क्या स्वभाव है, ( इसको दर्शाते हुए ) कहा गया है कि 'वह मननात्मक है'। इस प्रकार शब्द निर्वचन की प्रक्रिया से मननात्मक होने के कारण वह मन कहलाता है।

( ६ )

विज्ञानस्वरूपत्वादवश्यं तच्चैत्तैः संप्रयुज्यते। इदं तु न ज्ञायते कतमैस्तच्चैत्तैः कियद्भिः कियन्तं कालं वा संप्रयुज्यत इत्यत आह—

**क्लेशैश्चतुर्भिः सहितं निवृताव्याकृतैः सदा।**

( ६ )

विज्ञान स्वरूप होने के कारण उसको अवश्य चैत्तों से युक्त होना चाहिए। यह नहीं ज्ञात होता है कि वह किन तथा कितने चैत्तों से कितने काल के लिए सम्प्रयुक्त होता है, अतः कहा गया है—

'चार निवृताव्याकृत क्लेशों के साथ वह सर्वदा रहता है'।

चैत्ता हि द्विप्रकाराः क्लेशास्तदन्ये च। तदन्येभ्यो व्यवच्छेदार्थमाह-'क्लेशैरिति'। क्लेशा अपि षट्। न च तैः संप्रयुज्यतेऽतश्चतुर्भिरित्याह। सहितमिति संप्रयुक्तम्। क्लेशा अपि द्विविधाः, अकुशला निवृताव्याकृताश्च। अकुशलेभ्यो विशेषार्थमाह-निवृताव्याकृतैरिति।

न हि निवृतेन विज्ञानेनाकुशलानां संप्रयोगः संभवति। निवृताः क्लिष्टत्वात्। अव्याकृताः कुशलाकुशलत्वेनाव्याकरणात्। सदेति सर्वकालम्। यावदस्ति[1] तावत्तैः संप्रयुक्तम्।

चैत्त दो प्रकार के होते हैं,—क्लेश तथा उनसे भिन्न। यहां अन्यों से ( अर्थात् क्लेश भिन्न चैत्तों से ) पृथक् करने के लिए कहा गया है—'क्लेशों से'। क्लेश छः प्रकार के हैं। उन सभी के साथ सम्प्रयुक्त नहीं होता है, अतः चार के साथ कहा गया है। 'सहित' का अर्थ सम्प्रयुक्त है। क्लेश भी दो प्रकार के हैं—अकुशल तथा निवृताव्याकृत। अकुशलों से पृथक् करने के लिए कहा गया है—'निवृताव्याकृत के साथ रहता है'। निवृत विज्ञान के साथ अकुशलों का सम्प्रयोग संभव नहीं है। क्लिष्ट होने के कारण वे निवृत कहलाते हैं। कुशल या अकुशल के रूप में व्याकृत न होने के कारण अव्याकृत हैं। 'सदा' का अर्थ सर्वकाल है। जब तक ( वह आलय विज्ञान रहता ) है, तब तक वह ( उन क्लेशों से सम्प्रयुक्त ) रहता है।

१. C. यावत्तदस्ति।



सामान्यनिर्देशात् विशेषतो न ज्ञायन्त इति विशेषतो निर्दिशति—

**आत्मदृष्ट्यात्ममोहात्ममानात्मस्नेहसंज्ञितैः ॥ ६ ॥**

सामान्य के निर्देश से विशेष का ज्ञान नहीं होता है, अतः विशेष का निर्देश किया जाता है।

'आत्मदृष्टि, आत्ममोह, आत्ममान तथा आत्मस्नेह नामक चार क्लेशों से युक्त रहता है' ॥ ६ ॥

उपादानस्कन्धेष्वात्मेति दर्शनमात्मदृष्टिः। सत्कायदृष्टिरित्यर्थः। मोहोऽज्ञानम्। आत्मन्यज्ञानमात्ममोहः। आत्मविषये मान आत्ममानोऽस्मिमान इत्यर्थः।

उपादानस्कन्धों को आत्मा के रूप में देखना आत्मदृष्टि है। सत्कायदृष्टि इसका अर्थ है।

मोह अज्ञान को कहते हैं। आत्मविषयक अज्ञान को आत्म मोह कहते हैं।

आत्मविषयक मान को आत्ममान कहते हैं, अस्मिमान इसका अर्थ है।

आत्मनि स्नेह आत्मस्नेह[1] आत्मप्रेमेत्यर्थः। तत्रालयविज्ञानस्वरूपे संमूढः सन्नालयविज्ञाने आत्मदृष्टिमुत्पादयति। आत्मदर्शनाद्या चित्तस्योन्नतिः सोऽस्मिमानः। एतस्मिंस्त्रये सति आत्माभिमते वस्तुनि योऽभिष्वङ्गः, स आत्मस्नेहः। आह च—

आत्मस्नेह का अर्थ है आत्मा में प्रेम रखना। आलयविज्ञान के स्वरूप को न जानता हुआ मनुष्य आलयविज्ञान में आत्मदृष्टि उत्पन्न करता है। अर्थात् उसी को आत्मा समझता है। आत्मदृष्टि के कारण जो चित्त की उन्नति है, वह अस्मिमान है। इन तीनों के होने पर आत्मा के रूप में समझते हुए वस्तु में जो आसक्ति है, वही आत्मस्नेह है। कहा गया है—

अविद्यया चात्मदृष्ट्या चास्मिमानेन तृष्णया।
एभिश्चतुर्भिः संक्लिष्टं मननालक्षणं मनः ॥
विपर्यासनिमित्तं तु मनः क्लिष्टं सदैव यत्।
कुशलाव्याकृते चित्ते सदाहङ्कारकारणम् ॥

( ७ )

एते हि—

'आत्ममोहादयः क्लेशा मनोवन्नवभूमिकाः।'

१. C. adds.

मनन लक्षण वाला मन अविद्या, आत्मदृष्टि, अस्मिमान और तृष्णा इन चारों से संक्लिष्ट है। जो क्लिष्ट मन है, वही सर्वदा मिथ्या ज्ञान का निमित्त है। कुशल एवं अव्याकृत चित्त में सर्वदा अहंकार का कारण है।

( ७ )

'ये आत्ममोहादि क्लेश मन के समान नव भूमि वाले हैं'।

**इह च सामान्येनाभिधानान्न ज्ञायते किं स्वभूमिकैरेव संप्रयुज्यते, उतान्यभूमिकैरपीत्यत आह—**

**यत्रजस्तन्मयैर्—**

यहां सामान्यतः कथन से यह नहीं ज्ञात होता है कि वह अपनी भूमि वालों के साथ सम्प्रयुक्त होता है या अन्य भूमि वालों के साथ भी, एतदर्थ कहा गया है—

'जहां जन्म लेता है, उन्हीं के साथ'...।

**इति। यत्र जातो यत्रजः। तन्मयैरिति यत्र धातौ भूमौ वा जातस्तद्धातुकैः तद्भूमिकैरेव च संप्रयुज्यते नान्यधातुकैरन्यभूमिकैर्वा।**

'यत्रज' का अर्थ है जहां उत्पन्न होता है। 'उसके साथ' से अभिप्राय है कि जिस धातु या भूमि में उत्पन्न होता है उसी धातु और भूमि वालों के साथ सम्प्रयुक्त होता है, अन्य धातु और भूमि वालों के साथ नहीं।

**किं पुनश्चतुर्भिरेव क्लेशैः संप्रयुज्यते। नेत्याह—**

**.........—अन्यैः स्पर्शाद्यैश्च—**

पुनः क्या वह चार ही क्लेशों से सम्प्रयुक्त होता है? नहीं, इस अभिप्राय से कहा गया है:—

.........अन्य स्पर्शादि के साथ भी—

**संप्रयुज्यत इति संबध्यते। च शब्दः समुच्चयार्थः। स्पर्शाद्यैरिति स्पर्शमनस्कारवेदनासंज्ञाचेतनाभिः। एते हि पंचधर्माः सर्वत्रगत्वात्सर्वविज्ञानैः संप्रयुज्यन्ते। एतैरपि यत्र जातस्तन्मयैरेव संप्रयुज्यते नान्यधातुभूमिकैः। अथ वान्यैरिति मूलविज्ञानसंप्रयुक्तेभ्यो व्यवच्छेदार्थम्। मूलविज्ञाने ह्यनिवृताव्याकृताः स्पर्शादयः। क्लिष्टे तु मनसि मनोवन्निवृताव्याकृताः।**



**यदि तत्क्लिष्टं मनः कुशलक्लिष्टाव्याकृतावस्थास्वविशेषेण प्रवर्तते न तस्य तर्हि निवृत्तिरस्ति। अनिवृत्ते च तस्मिन्कुतो मोक्ष इति? कथ न मोक्षाभावः प्रसज्यते?**

सम्प्रयुक्त होता है—ऐसा सम्बन्ध कर लेना चाहिए। 'च' शब्द समुच्चय के लिए है। स्पर्शादि का अर्थ है स्पर्श, मनस्कार, वेदना, संज्ञा तथा चेतना के साथ। ये पांच धर्म सर्वत्रगामी होने के कारण सभी विज्ञानों से सम्प्रयुक्त होते हैं। जहां ये उत्पन्न होते हैं; उन्हीं के साथ इनका सम्प्रयोग होता है, अन्य धातु तथा भूमि वालों के साथ नहीं। अथवा 'अन्य' शब्द यहां पर मूलविज्ञान से सम्प्रयुक्तों से पृथक् करने के लिए है। मूलविज्ञान में अनिवृताव्याकृत स्पर्शादि हैं। क्लिष्ट मन में मन के समान ही निवृताव्याकृत हैं।

यदि वह क्लिष्ट मन कुशल, क्लिष्ट और अव्याकृत अवस्थाओं में सामान्य रूप से प्रवृत्त होता है तब तो उसकी निवृत्ति ही नहीं हो सकती है। उसकी निवृत्ति नहीं होने पर पुनः मोक्ष ही कहां? अतः मोक्ष के अभाव की प्राप्ति कैसे नहीं होगी?

**न प्रसज्यते। यस्मात्—**

**—अर्हतो न तत्।**

**न निरोधसमापत्तौ, मार्गे लोकोत्तरे न च ॥ ७ ॥**

( मोक्ष के अभाव की प्राप्ति ) नहीं हो सकती है। क्योंकि—

'अर्हत् को वह मन नहीं होता है। न वह निरोधसमापत्ति की अवस्था में रहता है और न लोकोत्तर मार्ग में ही' ॥ ७ ॥

**अर्हतस्तावदशेषक्लेशप्रहाणात्क्लिष्टं मनो नैवास्ति, तद्धि भावाग्रिकभावनाप्रहातव्यक्लेशवदर्हत्वप्राप्त्यानन्तर्यमार्गेणैव प्रहीयते। तदन्यक्लेशवदर्हत्वावस्थायां नैव विद्यते। आकिंचन्यायतनवीतरागस्याप्यनागामिनो निरोधसमापत्तिलाभिनो मार्गबलेन निरोधसमापत्तेर्लभ्यत्वान्मार्गवन्निरोधसमापत्त्यवस्थायामपि निरुध्यते। निरोधाच्च व्युत्थितस्य पुनरालयविज्ञानादेव प्रवर्तते।**

**मार्गे लोकोत्तरे न चेति। लोकोत्तरग्रहणं लौकिकव्यवच्छेदार्थम्। लौकिके तु मार्गे क्लिष्टं मनः प्रवर्तत एव। नैरात्म्यदर्शनस्यात्मदर्शनप्रतिपक्षत्वान्न लोकोत्तरमार्गे प्रवर्तितुमुत्सहते[1]। विपक्षप्रतिपक्षयोरयौगपद्या-**

---

१. A.-सहेत।

ल्लोकोत्तरमार्गे तन्निरुध्यते । तस्मादपि व्युत्थितस्य पुनरालयविज्ञाना-देवोत्पद्यते ।

अर्हत् के सम्पूर्ण क्लेश नष्ट हो जाने के कारण क्लिष्ट मन भी नहीं रहता है, क्योंकि वह ( क्लिष्ट मन ) भावाग्रिकभावना से नष्ट होने वाले क्लेशों के समान आनन्तर्य मार्ग से ही नष्ट हो जाता है । वह अन्य क्लेशों के समान अर्हत् की अवस्था में विद्यमान नहीं रहता है । आकिञ्चन्यायतन अवस्था से वीतराग अनागामी निरोधसमापत्तिलाभ करने वाले को मार्ग के बल से निरोधसमापत्ति की प्राप्ति होती है, इसलिए मार्ग के समान निरोधसमापत्ति की अवस्था में वह निरुद्ध हो जाता है । निरोधसमापत्ति से उठने पर पुनः आलय-विज्ञान से प्रवृत्त होता है ।

लोकोत्तर मार्ग में नहीं होता है । लोकोत्तरग्रहण लौकिक के व्यव-च्छेद के लिए है । लौकिक मार्ग में क्लिष्टमन प्रवृत्त होता है । नैरात्म्य-दर्शन का आत्मदर्शन प्रतिपक्षी होने के कारण लोकोत्तर मार्ग में वह नहीं प्रवृत्त हो सकता है । पक्ष एवं प्रतिपक्ष दोनों एक साथ नहीं हो सकते हैं, अतः वह लोकोत्तर मार्ग में निरुद्ध हो जाता है । अतः ( उससे ) उठने पर पुनः आलयविज्ञान से ही वह उत्पन्न होता है ।

( ८ )

**द्वितीयः परिणामोऽयम्—**

उद्दिष्टो निर्दिष्टश्चेति निगमयति ।

( ८ )

'यह द्वितीय परिणाम है·········।

(वह) उदिष्ट और निर्दिष्ट हो गया, ऐसा उपसंहार करते हैं ।

द्वितीयपरिणामानन्तरं तृतीयपरिणामो वक्तव्य इत्यत आह—

**—तृतीयः षड्विधस्य या ।**

**विषयस्योपलब्धिः सा—**

द्वितीय परिणाम के ( कथन के ) अनन्तर तृतीय परिणाम को कहना चाहिए, अतः कहा गया है—

'जो छ प्रकार की विषयोपलब्धियां हैं, उन्हीं का नाम तृतीय परिणाम है' ।

तृतीयो विज्ञानपरिणाम इति वाक्यशेषः । षड्विधस्येति षट्प्रकारस्य रूपशब्दगन्धरसस्प्रष्टव्यधर्मात्मकस्य विषयस्य या उपलब्धिर्ग्रहणं प्रति-पत्तिरित्यर्थः ।



—'यह तृतीय विज्ञानपरिणाम है', यह वाक्यशेष है । 'षड्विध' का अर्थ—रूप, शब्द, गन्ध, रस, स्प्रष्टव्य तथा धर्म—इन छ प्रकार के विषयों की उपलब्धि, ग्रहण या प्रतिपत्ति ।

सा पुनः किं कुशला अकुशला अव्याकृतेत्यत आह—

**—कुशलाकुशलाद्वया ॥ ८ ॥**

पुनः वह कुशल, अकुशल या अव्याकृत है, इसको बतलाया जाता है—

······'कुशल, अकुशल और अद्वय' ॥ ८ ॥

कुशलाऽकुशलाऽद्वयेत्यव्याकृतापि । अलोभाद्वेषामोहैः संप्रयुक्ता कुशला । लोभद्वेषमोहैः संप्रयुक्ताऽकुशला । कुशलाकुशलैरसंप्रयुक्ता अद्वया । न कुशला नाकुशलेत्यर्थः ।

कुशल, अकुशल तथा अद्वय अर्थात् अव्याकृत है । अलोभ, अद्वेष तथा अमोह (कुशल हेतुओं) से सम्प्रयुक्त होने के कारण कुशल कहलाता है । लोभ, द्वेष तथा मोह से सम्प्रयुक्त होने से अकुशल है । कुशल तथा अकुशल इन दोनों से असम्प्रयुक्त ( वह ) अद्वय अर्थात् अव्याकृत कहलाता है, जो न कुशल ही है, न अकुशल ही, ऐसा समझना चाहिए ।

( ९ )

सा पुनः कीदृशैश्चैतसिकैः संप्रयुज्यते ? कियन्तो वा तत्संप्रयोगिण-श्चैतसिका इत्यत आह—

**सर्वत्रगैर्विनियतैः कुशलैश्चैतसैरसौ ।**
**संप्रयुक्ता तथा क्लेशैरुपक्लेशैस्त्रिवेदना ॥ ९ ॥**

( ९ )

पुनः वह ( तृतीय परिणाम ) किन चैतसिकों से सम्प्रयुक्त होता है ? या कितने चैतसिक उसके सम्प्रयोगी हैं, ( इस अभिप्राय से ) कहा गया है :—

—"वह सर्वत्रग, विनियत, कुशल, क्लेशों, उपक्लेशों—इन चैतसिकों से तथा तीन प्रकार की वेदनाओं से सम्प्रयुक्त है" ॥ ९ ॥

य एते सर्वत्रगा[1] उद्दिष्टास्ते न विज्ञायन्त इत्यतस्तत्प्रदर्शनार्थमाह ।

जो सर्वत्रगति वाले कहे गये, वे ( सम्यक् रूप से ) ज्ञात नहीं होते हैं; अतः उनको दर्शाने के लिए कहा गया है—

---

१. C. सर्वत्रगादय ।

( १० )

**आद्याः स्पर्शादयः —**

आदौ निर्दिष्टत्वादाद्याः, सर्वत्रगा इत्यर्थः। तथा हि—सदा स्पर्शमनस्कारवित्संज्ञाचेतनान्वितम् इति प्रथमतो निर्दिष्टाः। स्पर्श एषामादिरिति स्पर्शादयः। ते पुनः स्पर्शमनस्कारादयः पञ्च धर्माः सर्वं चित्तमनुगच्छन्तीति सर्वत्रगाः। तथा ह्येत आलयविज्ञाने क्लिष्टे मनसि प्रवृत्तिविज्ञानेषु च अविशेषेण प्रवर्तन्ते।

( १० )

'( इस श्लोक के ) प्रारम्भ में ( सर्वत्रग शब्द से ) स्पर्शादि गृहीत होते हैं'।

आदि में कहे जाने के कारण वे 'आद्य' कहे गये हैं, सर्वत्र गति वाले चैतसिक यहां 'आद्य' शब्द से गृहीत हैं। यथा—'स्पर्श, मनस्कार, वेदना, संज्ञा तथा चेतना से सर्वदा युक्त रहता है', यह पहले कहा जा चुका है। इनमें स्पर्श प्रथम है, अतः स्पर्शादि कहा गया है। पुनः वे स्पर्श मनस्कार आदि पांच धर्म सभी चित्तों में अनुगत हैं, अतः सर्वत्र गतिवाले कहे जाते हैं। यथा ये आलयविज्ञान, क्लिष्ट मन तथा प्रवृत्तिविज्ञान में अविशेष रूप से प्रवृत्त होते हैं।

विनियतानधिकृत्याह—

**—छन्दाधिमोक्षस्मृतयः सह।**

**समाधिधीभ्यां नियताः —**



( पुनः ) विनियतों को लक्ष्य करके उक्त है कि :—

'समाधि, धी, छन्द, अधिमोक्ष, तथा स्मृति—ये विनियत चैतसिक हैं'।

विशेषे नियतत्वाद्विनियताः। एषां हि विशेष एव विषयो न सर्वः।

विशेष विषय में नियत रहने के कारण विनियत कहे गये हैं क्योंकि इनके विशेष ही विषय होते हैं, सभी नहीं।

तत्र छन्दोऽभिप्रेते वस्तुन्यभिलाषः। अभिप्रेते वस्तुन्यभिलाष इति प्रतिनियतविषयत्वं ज्ञापितं भवत्यनभिप्रेते छन्दाभावात्। दर्शनश्रवणादिक्रियाविषयत्वेन यदभिमतं वस्तु तदभिप्रेतम्। तत्र दर्शनश्रवणादि प्रार्थना छन्दः। स च वीर्यारम्भसंनिश्रयदानकर्मकः।

अभीष्ट वस्तु की अभिलाषा को छन्द कहते हैं। 'अभीष्ट वस्तु में अभिलाषा' ऐसा कहने से उसके विषय की निश्चितता ज्ञापित होती है क्योंकि अनिष्ट वस्तु में



इच्छा का अभाव होता है। दर्शन श्रवणादि क्रियाओं के विषय के रूप में जो अभीष्ट है, वही अभिप्रेत है। दर्शन श्रवणादि की प्रार्थना ही छन्द है। वह उसके लिए वीर्यारम्भ ( उद्योग करने का ) का आश्रय प्रदान करता है।

अधिमोक्षो निश्चिते वस्तुनि तथैवावधारणम्। निश्चितग्रहणमनिश्चितप्रतिषेधार्थम्। युक्तित आप्तोपदेशतो वा यद्वस्तु असंदिग्धं तन्निश्चितम्। येनैवाकारेण तन्निश्चितमनित्यदुःखाद्याकारेण तेनैवाकारेण तस्य वस्तुनश्चेतस्यभिनिवेशनमेवमेतन्नान्यथेत्यवधारणमधिमोक्षः। स चासंहार्यतादानकर्मकः। अधिमुक्तिप्रधानो हि स्वसिद्धान्तात्परप्रवादिभिरपहर्तुं न शक्यते।

निश्चित वस्तु का उसी प्रकार अवधारण करना ही अधिमोक्ष है। निश्चित शब्द का ग्रहण अनिश्चित के निषेध के लिए है। युक्ति या आप्तोपदेश से जो वस्तु सन्देहरहित है, वह निश्चित ( वस्तु ) कहलाता है। जिस अनित्य दुःख आदि आकार से वह ( वस्तु ) निश्चित है, उसी आकार से उस वस्तु को चित्त में दृढ़ करना कि 'यह ऐसा ही है, इससे भिन्न नहीं—ऐसा निश्चय करना अधिमोक्ष कहलाता है। उसका कार्य असंहार्यता प्रदान करना है। अधिमोक्ष की प्रबलता होने पर मनुष्य परवादियों द्वारा अपने सिद्धान्त से विचलित नहीं किया जा सकता है।

स्मृतिः संस्तुते वस्तुन्यसंप्रमोषश्चेतसोऽभिलपनता। संस्तुतं वस्तु पूर्वानुभूतम्। आलम्बनग्रहणाविप्रणाशकारणत्वादसंप्रमोषः। पूर्वगृहीतस्य वस्तुनः पुनः पुनरालम्बनाकारस्मरणमभिलपनता। अभिलपनमेवाभिलपनता। सा पुनरविक्षेपकर्मिका। आलम्बनाभिलपने सति चित्तस्यालम्बनान्तरे आकारान्तरे वा विक्षेपाभावादविक्षेपकर्मिका।

पूर्व अनुभूत वस्तु में जो चित्त का असंप्रमोष और अभिलपनता है, वही स्मृति है। 'संस्तुत' वस्तु का अर्थ है पूर्वानुभूत वस्तु। आलम्बन ग्रहण के नाश न होने का कारण होने से असंप्रमोष है। पूर्वगृहीत वस्तु का आलम्बन के रूप में पुनः पुनः स्मरण ही अभिलपनता है। अभिलपन ही अभिलपनता है। उसका कार्य विशेष का अभाव करना है। आलम्बन का अभिलपन होने पर चित्त दूसरे आलम्बन या आकार में विक्षिप्त नहीं होता।

समाधिरुपपरीक्ष्ये वस्तुनि चित्तस्यैकाग्रता। उपपरीक्ष्यं वस्तु गुणतो दोषतो वा। एकाग्रता एकालम्बनता। ज्ञानसंनिश्रयदानकर्मकः। समाहिते चित्ते यथाभूतपरिज्ञानात्।

उपपरीक्ष्य वस्तु में चित्त की एकाग्रता समाधि है। गुण और दोष की जिसमें परीक्षा की जाय, वह उपपरीक्ष्य वस्तु है। एकाग्रता का अर्थ है एकालम्बनता अर्थात् एक ही आलम्बन का होना। उसका कार्य ज्ञान का सन्निश्रय प्रदान करना है। क्योंकि चित्त के समाहित होने पर यथार्थ ज्ञान होता है।

धीः प्रज्ञा। साप्युपपरीक्ष्य एव वस्तुनि प्रविचयो योगायोगविहितोऽन्यथा वेति। प्रविचिनोतीति प्रविचयः। यः सम्यङ् मिथ्या वा संकीर्णस्वसामान्यलक्षणेष्विव धर्मेषु विवेकावबोधः।

धी का अर्थ है प्रज्ञा। वह भी उपपरीक्ष्य वस्तु में योगविहित या अयोगविहित या इन दोनों से भिन्न प्रविचय का नाम है। प्रकृष्ट से विचयन करने को प्रविचयं कहते हैं। सत्य तथा मिथ्या जिनमें मिश्रित सा है, उन स्वलक्षण तथा सामान्यलक्षण वाले धर्मों के विवेक युक्त ज्ञान का यह नाम है।

युक्तिर्योगः। स पुनराप्तोपदेशोऽनुमानं प्रत्यक्षं च। तेन त्रिप्रकारेण योगेन यो जनितः स योगविहितः। स पुनः श्रुतमयश्चिन्तामयो भावनामयश्च।

युक्ति को योग कहते हैं। वह प्रत्यक्ष अनुमान तथा आप्तोपदेश तीन प्रकार का है। उस तीन प्रकार के योग से जो जनित है, वह योगविहित है। वह पुनः श्रुतमय चिन्तामय तथा भावनामय होता है।

तत्राप्तवचनप्रामाण्याद्योऽवबोधः स श्रुतमयः।
युक्तिनिध्यानजश्चिन्तामयः।
समाधिजो भावनामयः।

इनमें आप्तवचन के प्रामाण्य से जो ज्ञान होता है, वह श्रुतमय है।
युक्तियों के द्वारा जो ज्ञान होता है, वह चिन्तामय कहलाता है।
समाधि जनित ज्ञान को भावनामय कहा जाता है।

अयोगोऽनाप्तोपदेशोऽनुमानाभासो मिथ्याप्रणिहितश्च समाधिस्तेनायोगेन जनितोऽयोगविहितः।

अयोग भी तीन प्रकार का होता है—अनाप्तोपदेश, अनुमानाभास तथा मिथ्याप्रणिहित समाधि। उस अयोग से उत्पन्न को अयोग विहित कहा गया है।

उपपत्तिप्रतिलम्भिको लौकिकव्यवहारावबोधश्च न योगविहितो नायोगविहितः। एषा च संशयव्यावर्तनकर्मिका। संशयव्यावर्तनं प्रज्ञया धर्मान्प्रविचिन्वतो निश्चयलाभादिति। एते हि पञ्च धर्माः परस्परं



व्यतिरिच्यापि प्रवर्तन्ते[1]। एवं यत्राधिमोक्षस्तत्र नावश्यमितरैरपि भवितव्यम्। एवं सर्वत्र वाच्यम्। उक्ता विनियताः।

उपपत्तियों के आधार पर जो लौकिक व्यवहार का ज्ञान है वह न योगविहित है, न अयोगविहित ही। इस प्रज्ञा का काम संशय को हटाना है। प्रज्ञा से धर्मों के ज्ञान होने से निश्चय का लाभ होता है, जिससे संशय की निवृत्ति हो जाती है। ये पांच धर्म एक दूसरे से पृथक् भी प्रवृत्त होते हैं। अतः जहां अधिमोक्ष है, वहां अन्य धर्मों का होना आवश्यक नहीं है। ऐसा ही सर्वत्र समझना चाहिए। इस प्रकार विनियत चैतसिकों को कह दिया गया।

तदनन्तरोद्दिष्टास्त्विदानीं कुशला वक्तव्या इत्यत आह—

**श्रद्धाथ ह्रीरपत्रपा ॥ १० ॥**

**( ११ )**

**अलोभादित्रयं वीर्यं प्रश्रब्धिः साप्रमादिका।**
**अहिंसा कुशलाः ——**

एत एकादश धर्मा इति वाक्यशेषः।

इसके अनन्तर कहे गये कुशलों को कहना चाहिए, अतः कहा गया है—

'श्रद्धा, ह्री, अपत्रपा ॥ १० ॥

( ११ )

अलोभ, अद्वेष, अमोह, वीर्य, प्रश्रब्धि, अप्रमाद तथा अहिंसा—
ये ग्यारह धर्म कुशल हैं, यह वाक्य शेष है।

तत्र श्रद्धा कर्मफलसत्यरत्नेष्वभिसंप्रत्ययः प्रसादश्चेतसोऽभिलाषः। श्रद्धा हि त्रिधा प्रवर्तते। सति वस्तुनि गुणवत्यगुणवति वा संप्रत्ययाकारा, सति गुणवति च प्रसादाकारा, सति गुणवति च प्राप्तुमुत्पादयितुं वा शक्येऽभिलाषाकारा चेतसः प्रसाद इति। श्रद्धा हि चित्तकालुष्यवैरोधिकीत्यतस्तत्संप्रयोगे क्लेशोपक्लेशमलकालुष्यविगमाच्चित्तं श्रद्धामागम्य प्रसीदतीति चेतसः प्रसाद उच्यते। सा पुनश्छन्दसंनिश्रयदानकर्मिका।

कर्मफल, आर्यसत्य एवं त्रिरत्नों में विश्वास प्रसाद तथा चित्त की अभिलाषा को श्रद्धा कहते हैं। श्रद्धा तीन प्रकार से प्रवृत्त होती है। विद्यमान, गुणवान या गुणहीन वस्तु में सम्प्रत्ययाकार अर्थात् विश्वास के रूप में, विद्यमान गुणवान वस्तु

---

१. व्यावर्तन्ते।

में प्रसाद अर्थात् रूचि के रूप में तथा विद्यमान गुणवान वस्तु, जिसे प्राप्त या उत्पन्न किया जा सकता है, उसमें अभिलाषा के रूप में ( उत्पन्न होती है )। श्रद्धा चित्त की कलुषता की विरोधिनी है, उसके संयोग से क्लेश तथा उपक्लेश रूपी मलों के नष्ट हो जाने से चित्त श्रद्धा को प्राप्त कर प्रसन्न होता है; अतः उसे चित्त का प्रसाद कहा गया है। इसका कार्य छन्द ( इच्छा ) को आश्रय देना है।

ह्रीरात्मानं धर्मं वाधिपतिं कृत्वावद्येन लज्जा। सद्भिर्गर्हितत्वादनिष्ट-विपाकत्वाच्च पापमेवावद्यम्। तेनावद्येन कृतेनाकृतेन वा या चित्तस्या-वलीनता लज्जा सा ह्रीः। इयं च दुश्चरितसंयमनसंनिश्रयदानकर्मिका।

आत्मगौरव या धर्मगौरव की बुद्धि से पाप करने में लज्जा का नाम ह्री है। सज्जनों से गर्हित होने से तथा अनिष्ट परिणामवाला होने से पाप ही अवद्य कहलाता है। उस पाप के प्रति चाहे वह किया गया हो, या न किया गया हो, जो चित्त का संकोच या लज्जा है, वह ह्री कहलाती है। इसका कार्य दुश्चरित्र से संयम को आश्रय देना है।

अपत्राप्यं लोकमधिपतिं कृत्वावद्येन लज्जा। लोके ह्येतद्गर्हितं मां चैवं कर्माणं विदित्वा गर्हिष्यतीत्ययशलोकादिभयाद्येन लज्जते। इदमपि दुश्चरितसंयमनसंनिश्रयदानकर्मकम्।

अपत्रपा लोक गौरव को ध्यान में रखते हुए पाप करने में लज्जा को कहते हैं। लोक में यह कार्य निन्दित है,—मुझको ऐसा करने वाला जानकर ( लोग ) निन्दा करेंगे—इस प्रकार अप्रशंसा आदि के भय से उत्पन्न लज्जा को अपत्रपा कहते हैं। इसका कार्य दुश्चरित्र से संयम को आश्रय देना है।

अलोभो लोभप्रतिपक्षः। लोभो नाम भवे भवोपकरणेषु च यासक्तिः प्रार्थना च। तत्प्रतिपक्षोऽलोभो भवे भवोपकरणेषु चाना-सक्तिः वैमुख्यं च। अयं च दुश्चरिताप्रवृत्तिसंनिश्रयदानकर्मकः।

अलोभ लोभ का प्रतिपक्षी है। लोभ भव या भव के उपकरणों में आसक्ति या प्रार्थना को कहते हैं। इसका प्रतिपक्षी अलोभ भव या भव के उपकरणों में अनासक्ति या विमुखता का नाम है। इसका कार्य दुराचरण में अप्रवृत्ति को आश्रय प्रदान करना है।

अद्वेषो द्वेषप्रतिपक्षो मैत्री। द्वेषो हि सत्वेषु दुःखे दुःखस्थानी-येषु च धर्मेष्वाघातः। अद्वेषो द्वेषप्रतिपक्षत्वात्सत्वेषु दुःखे दुःखस्थानी-येषु च धर्मेष्वनाघातः। अयमपि दुश्चरिताप्रवृत्तिसंनिश्रयदानकर्मकः।



अद्वेष मैत्री को कहते हैं, जो द्वेष का प्रतिपक्षी है। द्वेष प्राणियों के प्रति, या दुःख में, दुःखस्थानीय धर्मों मे आघात है। अद्वेष द्वेष का विरोधी होने से प्राणियों के प्रति या दुःख में या दुःखस्थानीय धर्मों में अनाघात को कहते हैं। इसका भी कार्य दुश्चरित्र में अप्रवृत्ति को आश्रय देना है।

अमोहो मोहप्रतिपक्षः। अयथाभूतसंप्रतिपत्तिर्मोहः, कर्मफलसत्य-रत्नेष्वज्ञानम्। मोहप्रतिपक्षत्वादमोहस्तेष्वेव कर्मफलसत्यरत्नेषु संप्रति-पत्तिः। अयमपि दुश्चरिताप्रवृत्तिसंनिश्रयदानकर्मकः।

अमोह मोह का प्रतिपक्षी है। मोह मिथ्या ज्ञान का नाम है, जो कि कर्मफल, आर्यसत्य तथा त्रिरत्नों के विषय में अज्ञान है। मोह का प्रतिपक्षी होने से अमोह कर्मफल, आर्यसत्य तथा त्रिरत्नों के ज्ञान को कहते हैं। यह दुश्चरित्र में अप्रवृत्ति को आश्रय प्रदान करता है।

वीर्यं कौशीद्यप्रतिपक्षः। कुशले चेतसोऽभ्युत्साहः, न तु क्लिष्टे। क्लिष्टे तूत्साहः कुत्सितत्वात्कौशीद्यमेव। एतच्च कुशलपक्षपरिपूरण-परिनिश्रयकर्मकम्[1]।

वीर्य, आलस्य का विरोधी है। कुशल कर्म में चित्त के उत्साह को वीर्य कहते हैं, क्लिष्ट कर्म में उत्साह को नहीं। क्लिष्ट कर्म का उत्साह नीन्द्य होने के कारण कौशीद्य ही कहलाता है। इसका कार्य कुशलपक्ष की पूर्ति को आश्रय प्रदान करना है।

प्रश्रब्धिर्दौष्ठुल्यप्रतिपक्षः कायचित्तकर्मण्यता। दौष्ठुल्यं काय-चित्तयोरकर्मण्यता सांक्लेशिकधर्मबीजानि च। तदपगमे प्रश्रब्धि-सद्भावात्। तत्र कायकर्मण्यता कायस्य स्वकार्येषु लघुसमुत्थानता यतो भवति। चित्तकर्मण्यता सम्यङ्मनसिकारसंप्रयुक्तस्याह्लादलाघव-निमित्तं यच्चैतसिकं धर्मान्तरं यद्योगा[2]च्चित्तमालम्बने प्रवर्ततेऽतस्तच्चित्त-कर्मण्यतेत्युच्यते।

प्रश्रब्धि दौष्ठुल्य का प्रतिपक्षी काय तथा चित्त की कर्मण्यता का नाम है। दौष्ठुल्य काय तथा चित्त की अकर्मण्यता तथा सांक्लेशिक धर्मों के बीज का नाम है। उसके नष्ट होने पर प्रश्रब्धि होती है। उनमें कर्मण्यता काय के अपने कार्यों में लहुसमुत्थान को कहते हैं। चित्त कर्मण्यता सम्यक् मनस्कार से युक्त चित्त की

१. C. परिनिष्पत्ति।
२. C. तद्यो-।

आह्लाद तथा लाघव के कारण उत्पन्न ऐसी अवस्था का नाम है, जिसके योग से चित्त आलम्बन में प्रवृत्त होता है, एतदर्थ यह चित्तकर्मण्यता कहलाती है।

कायस्य पुनः स्प्रष्टव्य-विशेष एव प्रीत्या हृतः[1] कायप्रश्रब्धिर्वेदितव्या। 'प्रीतमनसः कायः प्रश्रभ्यत' इति सूत्रे वचनात्। इयं तद्वशेनाश्रयपरावृत्तितोऽशेषक्लेशावरणनिष्कर्षणकर्मिका।

प्रीति से आहृत काय के स्प्रष्टव्य विशेष को ही कायप्रश्रब्धि कहते हैं। (प्रसन्नता के कारण शरीर की जो विशेष स्थिति उत्पन्न होती है, वही कायप्रश्रब्धि है)। 'प्रीतिमन वाले का काय प्रश्रब्ध होता है'—इस सूत्र वचन से। उसके कारण आश्रय परावृत्ति होती है, (अतः) यह समस्त क्लेशावरण को हटाने का काम करती है।

साप्रमादिका। सहाप्रमादेन वर्तत इति साप्रमादिका। का पुनरसौ? उपेक्षा। कुत एतत्? एकान्तकुशलत्वात्। सर्वकुशलानां चेह निर्देशाधिकाराच्छ्रद्धादिवत् साक्षादनिर्देशात् तद्व्यतिरिक्तान्यकुशलाभावाच्च उपेक्षैव विज्ञायते।

साप्रमादिका। साप्रमादिका का अर्थ है अप्रमाद के साथ वर्तमान। यह क्या है? वह उपेक्षा है। यह कैसे? एकान्ततः कुशल होने के कारण। सभी कुशलधर्मों का निर्देश करते हुए श्रद्धा आदि के समान (इसका) साक्षात् निर्देश नहीं किये जाने से उसके अतिरिक्त अन्य कुशल नहीं हैं, अतः यह उपेक्षा ही मालूम पड़ती है।

तत्राप्रमादः प्रमादप्रतिपक्षः। अलोभाद्यावद्वीर्यमप्रमादः। यैरलोभादीन्निश्रित्याकुशलान्धर्मान्प्रजहाति तत्प्रतिपक्षांश्च कुशलान्धर्मान्भावयति, तेऽलोभादयोऽप्रमादः। अत एव प्रमादप्रतिपक्षः प्रमादस्यातो विपरीतत्वात्। स पुनर् लौकिकलोकोत्तरसंपत्तिपरिपूरणकर्मकः।

अप्रमाद प्रमाद का प्रतिपक्षी है। अलोभ से वीर्य तक अप्रमाद है। जिनके द्वारा अलोभादि के आश्रय से अकुशल धर्मों को छोड़ता है और उसके विरोधी कुशल धर्मों की भावना करता है, (अतः) वे अलोभादि अप्रमाद हैं। वे प्रमाद के विरोधी हैं क्योंकि प्रमाद उसका विपरीत धर्म है। इस अप्रमाद का कार्य लौकिक और लोकोत्तर सम्पत्ति की पूर्ति करना है।

उपेक्षा चित्तसमता चित्तप्रशठता चित्तानाभोगता। एभिस्त्रिभिः पदैरुपेक्षाया आदिमध्यावसानावस्था द्योतिताः। तत्र लय औद्धत्यं

१. C. हृते।



वा चेतसो वैषम्यम्। तस्याभावादादौ चित्तसमता। ततोऽनभिसंस्कारेणाप्रयत्नेन समाहितचेतसो यथाभियोगं समस्यैव या प्रवृत्तिः सा चित्तप्रशठता। सा पुनरवस्था लयौद्धत्यशङ्कानुगताचिरभावित्वात्। ततो भावनाप्रकर्षगमनात्तद्विपक्षदूरीभावात्तच्छङ्काभावे लयौद्धत्यप्रतिपक्षनिमित्तेष्वाभोगमकुर्वतोऽनाभोगावस्था चित्तस्यानाभोगता। इयं च सर्वक्लेशोपक्लेशानवकाशसंनिश्रयदानकर्मिका।

उपेक्षा चित्त की समता, प्रशठता तथा अनाभोगता को कहते हैं। इन तीन पदों से उपेक्षा की आदि, मध्य और अवसान अवस्था द्योतित होती है। चित्त का लय या उद्धतता वैषम्य है। उसके न होने से पहले चित्त की समता होती है। तब अभिसंस्कार और प्रयत्न के बिना ही समाहित चित्तवाले पुरुष की सम के समान जो प्रवृत्ति है, वह चित्त प्रशठता कहलाती है। पुनः वह अवस्था लय और औद्धत्य की शंका से युक्त रहती है (क्योंकि वह समता की स्थिति अभी प्राप्त हुई रहती है)। भावना के प्रकर्ष से इसके विपक्ष के दूर हो जाने से, उसकी शंका न रहने पर, लय और औद्धत्य के प्रतिपक्ष निमित्तों में आभोग न करने वाले को जो अनाभोग की अवस्था होती है, वही चित्त की अनाभोगता है। इसका कार्य सभी क्लेशों तथा उपक्लेशों को अवकाश न देना है।

अविहिंसा विहिंसाप्रतिपक्षः। वधबन्धनादिभिः सत्त्वानामविहेठनमविहिंसा सत्वेषु करुणा। कं रुणद्धीति करुणा। कमिति सुखस्याख्या सुखं रुणद्धीत्यर्थः। कारुणिको हि परदुःखदुःखी भवतीति। इयं चाविहेठनकर्मिका।

अविहिंसा विहिंसा का प्रतिपक्षी है। वध बन्धनादि के द्वारा प्राणियों की हिंसा न करना या दया करना अविहिंसा है। सुख को जो रोक रखे वह करुणा है। कं का अर्थ सुख है, उसको जो रोकती है, वह करुणा है क्योंकि कारुणिक परदुःख से दुखी होता है। इसका कार्य दुःख न देना है।

उक्ता एकादश कुशलास्तदनन्तरोद्दिष्टास्तु क्लेशा इत्यतस्तानधिकृत्याह—

—क्लेशारागप्रतिघमूढयः ॥ ११ ॥

ग्यारह कुशल धर्म कह दिये गये, तदनन्तर क्लेशों का उपदेश किया गया है, अतः उनके विषय में कहते हैं।

'क्लेश हैं—राग द्वेष मोह' ॥ ११ ॥

( १२ )

मानदृग्विचिकित्साश्च—

इति रागश्च प्रतिघश्च मूढिश्च रागप्रतिघमूढयः।

तत्र रागो भवभोगयोरध्यवसानं प्रार्थना च। स पुनर्दुःखसंयोजनकर्मकः। दुःखमत्रोपादानस्कन्धास्तेषां कामरूपारूप्यतृष्णावशादभिनिर्वृत्तिः। अतो रागस्य दुःखसंयोजनं कर्मनिर्दिश्यते।

( १२ )

'मान दृष्टि विचिकित्सा……'।

राग द्वेष और मोह को रागप्रतिघमूढी कहा गया है।

भव और भोग का निश्चय और प्रार्थना राग कहलाता है। इसका कार्य दुःख का संयोजन करना है। उपादानस्कन्ध ही दुःख है, उनकी कामधातु, रूपधातु एवं अरूपधातु में तृष्णा के बल से अभिनिर्वृत्ति होती है। इसलिए राग का दुःख संयोजनकर्म कहा गया है।

प्रतिघः सत्त्वेष्वाघातः सत्त्वेषु रूक्षचित्तता येनाविष्टः सत्त्वानां वधबन्धनादिकमनर्थं चिन्तयति। स पुनरस्पर्शविहारदुश्चरितसंनिश्रयदानकर्मकः। स्पर्शः सुखं, तेन सहितो विहारः स्पर्शविहारः। न स्पर्शविहारोऽस्पर्शविहारः, दुःखसहित इत्यर्थः। आघातचित्तस्यावश्यं दौर्मनस्यसमुदाचाराच्चित्तं तप्यते। चित्तानुविधानाच्च कायोऽपि तप्यत एवेति सर्वेर्यापथेषु सदुःखसविघातोऽस्पर्शविहारो भवति। प्रतिहतचित्तस्य च न किंचिद् दुश्चरितं विदूर इति प्रतिघोऽस्पर्शविहारदुश्चरितसंनिश्रयदानकर्मक उक्तः।

प्रतिघ प्राणियों के प्रति आघात या चित्त के रूखापन को कहते हैं, जिसके द्वारा आविष्ट होने पर मनुष्य प्राणियों के वधबन्धनादि रूप अनर्थ की चिन्ता करता है। यह अस्पर्शविहार और दुश्चरित्र को आश्रय प्रदान करता है। स्पर्श सुख है, उससे युक्त विहार स्पर्शविहार है। न स्पर्शविहार, अस्पर्शविहार, दुःख सहित इसका अर्थ है। आघात चित्त वाले व्यक्ति का मन मानसिक क्लेश से सन्तप्त रहता है। चित्त के सन्तप्त होने से काय भी सन्तप्त होता है, अतः सभी ईर्यापथों ( व्यापारों ) में दुःख और विघात से सहित अस्पर्श विहार होता है। जिसका चित्त द्वेषयुक्त रहता है, उसके लिए कोई दुश्चरित दूर नहीं है, अतः

१-२. A. संजनन।



कहा गया है कि यह प्रतिघ अस्पर्शविहार और दुश्चरित को आश्रय प्रदान करने वाला है।

मोहोऽपायेषु सुगतौ निर्वाणे तत्प्रतिष्ठापकेषु हेतुषु तेषां चाविपरीते हेतुफलसम्बन्धे यदज्ञानम्। अयं च संक्लेशोत्पत्तिसंनिश्रयदानकर्मकः। तत्र क्लेशकर्मजन्मात्मकस्त्रिविधः संक्लेशः। तस्योत्पत्तिः पूर्वपूर्वसंक्लेशनिमित्त उत्तरोत्तरस्य संक्लेशस्यात्मलाभः। उत्पत्तेः संनिश्रयदानकर्मकमिति। मूढस्यैव हि मिथ्याज्ञानसंशयरागादिक्लेशपौनर्भविककर्मजन्मनां प्रवृत्तिर्नामूढस्येति।

अपाय, सुगति, निर्वाण, उसके प्रतिष्ठापक हेतु, उनके अविपरीत हेतुफल सम्बन्ध का जो अज्ञान है, उसे मोह कहते हैं। इसका कार्य क्लेशों की उत्पत्ति का आश्रय देना है। क्लेश, कर्म तथा जन्म ये तीन प्रकार के संक्लेश हैं। उसकी उत्पत्ति का अर्थ है पूर्व पूर्व क्लेशों के कारण उत्तर क्लेशों का उत्पन्न होना। उत्पत्ति का आश्रय देना इसका काम है। मूढ़ पुरुषों को मिथ्या ज्ञान, संशय, रागादिक्लेश, पुनर्जन्म प्रदान करने वाले कर्म तथा जन्म की प्रवृत्ति होती है, अमूढ़ को नहीं।

मानः। मानो हि नाम सर्व एव सत्कायदृष्टिसमाश्रयेण प्रवर्तते। स पुनश्चित्तस्योन्नतिलक्षणः। तथा ह्यात्मात्मीयभावं स्कन्धेष्वध्यारोप्यायमहमिदं ममेत्यात्मानं तेन तेन विशेषेणोन्नमयति अन्येभ्योऽधिकं मन्यते। स चागौरवदुःखोत्पत्तिसंनिश्रयदानकर्मकः। अगौरवं गुरुषु गुणवत्सु च पुद्गलेषु स्तब्धता कायवाचोरप्रश्रतता। दुःखोत्पत्तिः पुनरत्र पुनर्भवोत्पत्तिः। स च पुनश्चित्तोन्नतिस्वरूपाभेदेऽपि चित्तोन्नतिनिमित्तभेदात्सप्तधा भिद्यते, मानोऽतिमान इत्येवमादि।

मान। सभी प्रकार का मान सत्काय दृष्टि के आश्रय से प्रवृत्त होते हैं। उसका लक्षण चित्त को गर्वित करना है। स्कन्धों में आत्मा और आत्मीय भाव को आरोपित कर 'यह मैं हूं' और 'यह मेरा है'—इस प्रकार की विविध विशेषताओं के आरोप से मनुष्य गर्व का अनुभव करता है तथा दूसरों से अपने को अधिक समझता है। इसका कार्य गौरवजनित दुःख की उत्पत्ति को आश्रय प्रदान करना है। गुरु तथा गुणवान मनुष्यों के प्रति शरीर और वाणी की अविनम्रता को अगौरव कहते हैं। दुःख की उत्पत्ति का अर्थ है पुनर्भव के रूप में उत्पत्ति। वह ( मान ) चित्त को गर्वित करने के रूप में एक होते हुए भी गर्वित करने वाले कारणों के भेद से सात प्रकार का होता है, यथा—मान, अतिमान इत्यादि।

हीनात्कुलविज्ञानवित्तादिभिः 'श्रेयानस्मि' कुलविज्ञानवित्तादिभिरिति या चित्तस्योन्नतिः सदृशेन वा कुलादिभिरेव 'सदृशोऽस्मीति' या चित्तस्योन्नतिः स मानः।

जो अपने से हीन कुल, ज्ञान और धनवाले हैं, उनसे 'मैं बड़ा हूँ', तथा जो अपने से समान कुल वाले आदि हैं, 'मैं उनके समान हूँ'—ऐसा जो अहंकार है, वह मान कहलाता है।

अतिमानः। कुलविज्ञानवित्तादिभिः सदृशात्त्यागशीलपौरुषादिभिः 'श्रेयानस्मि' श्रेयसा वा कुलविद्यादिभिः 'सदृशोऽस्मि' विज्ञानवित्तादिभिरित्ययमतिमानः।

अतिमान। जो कुल, ज्ञान, धन आदि से अपने समान हैं, उनसे त्याग, शील, पौरुष आदि में–'मैं श्रेष्ठ हूँ', और जो कुल विद्या आदि में अपने से श्रेष्ठ हैं,—'मैं उनके समान हूँ',—ऐसा अहंकार अतिमान कहलाता है।

श्रेयसः कुलविज्ञानवित्तैरहमेव श्रेयान्कुलविज्ञानवित्तैरिति या चित्तस्योन्नतिरयं मानातिमानः।

जो कुल धन ज्ञानादि में अपने से श्रेष्ठ हैं, 'उससे मैं बड़ा हूँ', ऐसी धारणा मानातिमान है।

अस्मिमानः। पञ्चसूपादानस्कन्धेष्वात्मात्मीयरहितेष्वात्मात्मीयाभिनिवेशाद्या चित्तस्योन्नतिः सोऽस्मिमानः।

अस्मिमान। पांच उपादानस्कन्ध, जो आत्मा आत्मीय से रहित हैं, उनमें आत्मा आत्मीय के आग्रह से जो चित्त का अहंकार है, वह अस्मिमान है।

अभिमानः। अप्राप्त उत्तरे विशेषाधिगमे 'प्राप्तो मयेति' या चित्तस्योन्नतिः सोऽभिमानः।

अभिमान। विशेषता को प्राप्त किये बिना ही, यह मुझे प्राप्त हो गया है, ऐसा जानना अभिमान है।

ऊनमानः। बह्वन्तरविशिष्टात्कुलविद्यादिभिरल्पान्तरहीनोऽस्मि कुलविद्यादिभिरिति या चित्तस्योन्नतिरयमूनमानः।

ऊनमान। 'जो कुल विद्या आदि में बहुत बड़ा हो, उसके सम्बन्ध में यह सोचना कि 'मैं इससे थोड़ा कम हूँ', ऊनमान कहलाता है।

मिथ्यामानः। अगुणवतो गुणवानस्मीति या चित्तस्योन्नतिः स मिथ्यामानः। अगुणा हि दौःशील्यादयस्ते यस्य विद्यन्ते सोऽगुणवान्।



तस्माद्गुणवानस्मीत्यनेन हि दानशीलाद्यभावेऽपि गुणवत्त्वमभ्युपगतं भवतीत्यतो निर्वस्तुकत्वान्मिथ्यामान इत्युच्यते।

मिथ्यामान। गुण न रहने पर भी अपने को गुणवान समझना मिथ्यामान है। दुःशीलता आदि अगुण हैं, उनसे जो युक्त है, वह अगुणवान है। उसी के कारण दान शील आदि के न रहने पर भी अपने को गुणवान समझता है। अतः निर्वस्तुक होने से मिथ्यामान कहलाता है।

दृगिति सामान्यनिर्देशेऽपि क्लेशाधिकारात्पञ्चैव क्लेशात्मिकाः सत्कायदृष्ट्यादिका दृष्टयः संबध्यन्ते। न लौकिकी सम्यग्दृष्टिरनास्रवा। आसां तु क्लिष्टनितीरणाकारत्वाद्विशेषेऽप्यालम्बनाकारभेदात्परस्परतो भेदः।

यद्यपि (श्लोक में) दृक् ऐसा सामान्य निर्देश है तो भी यह क्लेश का प्रकरण होने से पांच क्लेशात्मक सत्कायदृष्टि आदि दृष्टियां दृक् पद से ग्रहण की जाती हैं। लौकिक अनास्रव सम्यक् दृष्टि न ली जाती है। यद्यपि ये पांचो दृष्टियां क्लिष्ट हैं, पर आलम्बन और आकार के भेद से इनमें परस्पर भेद होता है।

तत्र सत्कायदृष्टिर्यत्पञ्चसूपादानस्कन्धेष्वात्मात्मीयदर्शनम्।

पांच उपादानस्कन्धों में आत्मा या आत्मीयवत् अवधारण करना आत्मदृष्टि है।

अन्तग्राहदृष्टिस्तेष्वेव पञ्चसूपादानस्कन्धेष्वात्मीयत्वेन गृहीतेषु यदुच्छेदतः शाश्वततो वा दर्शनम्।

पांच उपादानस्कन्धों में आत्मा या आत्मीय भाव रखते हुए उसे शाश्वत या उच्छेद रूप में ग्रहण करना अन्तग्राहदृष्टि है।

मिथ्यादृष्टिः। यया मिथ्यादृष्ट्या हेतुं वापवदति फलं क्रियां वा सद्वा वस्तु नाशयति, सा सर्वदर्शनपापत्वान्मिथ्यादृष्टिरित्युच्यते।

मिथ्यादृष्टि। जिस मिथ्या दर्शन से हेतु फल क्रिया और सद् वस्तु का ज्ञान नहीं होता है, उस सर्वदर्शन को विनष्ट करने वाली दृष्टि को मिथ्या दृष्टि कहते हैं।

दृष्टिपरामर्शः पञ्चसूपादानस्कन्धेष्वग्रतो विशिष्टतः श्रेष्ठतः परमतश्च यद्दर्शनम्।

पांच उपादान स्कन्धों को अग्र विशिष्ट श्रेष्ठ परम (परिशुद्ध) समझना दृष्टिपरामर्श है।

शीलव्रतपरामर्शः पञ्चसूपादानस्कन्धेषु शुद्धितो मुक्तितो नैर्याणिकतश्च यद्दर्शनम् ।

पांच उपादानस्कन्धों को शुद्ध मुक्तिदायक दुःख नाशक समझना शीलव्रतपरामर्श है

विचिकित्सा कर्मफलसत्यरत्नेषु विमतिः । विविधा मतिर्विमतिः स्यान्नस्यादिति । प्रज्ञातश्चेयं जात्यन्तरमेवोक्ता ।

विचिकित्सा कर्मफल, आर्यसत्य तथा त्रिरत्नों में विमति है । विविध मति का होना कि ये हैं या नहीं विमति है । प्रज्ञा से यह भिन्न जाति के रूप में कही गयी है ।

उक्ताः षट्क्लेशास्तदनन्तरोद्दिष्टास्त्विदानीमुपक्लेशा वक्तव्या इत्यत आह—

—क्रोधोपनहने पुनः ।

म्रक्षः प्रदाश ईर्ष्याथ मात्सर्यं सह मायया ॥ १२ ॥

छः क्लेश कह दिये गये, इनके अनन्तर उदिष्ट होने के कारण उपक्लेश को कहना चाहिये, अतः कहा गया है—

'क्रोध, उपनाह, म्रक्ष, प्रदाश, इर्ष्या, मात्स्र्य, माया······' ॥ १२ ॥

( १३ )

शाठ्यं मदो विहिंसाऽह्रीरत्रपा स्त्यानमुद्धवः ।
आश्रद्धयमथ कौसीद्यं प्रमादो मुषिता स्मृतिः ॥ १३ ॥

( १३ )

शाठ्य, मद, विहिंसा, अह्री, अत्रपा, स्त्यान उद्धव, अश्रद्धा, कौशीद्य, प्रमाद, स्मृतिभ्रष्टता ॥ १३ ॥

( १४ )

विक्षेपोऽसंप्रजन्यं च कौकृत्यं मिद्धमेव च ।
वितर्कश्च विचारश्चेत्युपक्लेशा द्वये द्विधा ॥ १४ ॥

( १४ )

विक्षेप, असंप्रजन्य तथा कौकृत्य मिद्ध, वितर्क विचार—ये दोनों युग्म दो प्रकार के हैं ॥ १४ ॥



तत्र क्रोधो वर्तमानमपकारमागम्य यश्चेतस आघातः । अयं चाघातस्वरूपत्वात्प्रतिघान्न भिद्यते । किंत्वस्य प्रतिघस्यावस्थाविशेषे प्रज्ञप्तत्वात्प्रतिघांशिकः । वर्तमानमपकारमागम्य यश्चेतस आघातः सत्त्वासत्त्वविषयो दण्डदानादि—संनिश्रयदानकर्मकश्च स क्रोध इति प्रज्ञप्यते ।

वर्तमान अपकार के कारण जो चित्त में आघात होता है, उसे क्रोध कहते हैं । यह आघातस्वरूपी होने के कारण प्रतिघ से भिन्न नहीं है । किन्तु यह प्रतिघ की ही अवस्था विशेष होने के कारण प्रतिघांशिक है । वर्तमान अपकार के कारण जो सत्त्व या असत्त्व विषयक चित का आघात है, उसे क्रोध कहा जाता है, उसका कार्य दण्डदानादि को आश्रय प्रदान करना है ।

उपनाहो वैरानुबन्धः । क्रोधादूर्ध्वं ममानेनेदमपकृतमित्यस्य वैरात्मकस्यानुशयस्यानुत्सर्गः प्रबन्धेन प्रवर्तनमुपनाहः । अयं चाक्षान्तिसंनिश्रयदानकर्मकः । अक्षान्तिरपकारामर्षणं प्रत्यपकारचिकीर्षा च । अयमपि क्रोधवत्—प्रद्वेषावस्थाविशेषे प्रज्ञप्यते । अतः प्रज्ञप्तिसन्नेव वेदितव्यः ।

शत्रुता के नैरन्तर्य भाव को उपनाह कहते हैं । क्रोध के उपरान्त—इसने मेरा अपकार किया है, इस प्रकार के वैरात्मक भाव को न छोड़ना, उसको बनाये रहना उपनाह है । इसका कार्य अक्षान्ति को आश्रय देना है । अपकार का सहन न करना तथा पुनः अपकार करने की इच्छा करना अक्षान्ति है । यह भी क्रोध के समान द्वेष की अवस्थाविशेष के रूप में कहा गया है । अतः इसकी प्रज्ञप्तिरूप सत्ता समझनी चाहिए ।

म्रक्ष आत्मनोऽवद्यप्रच्छादना । छन्दद्वेषभयादीन्निराकृत्य काले तद्धितैषिणा चोदकेन तत् त्वमेवं कारीत्यनुयुक्तस्य मोहांशिक्यवद्यप्रच्छादना म्रक्षः । मोहांशिकत्वं तु म्रक्षस्य प्रच्छादनाकारत्वात् । अयं च कौकृत्यास्पर्शसंनिश्रयदानकर्मकः । धर्मतैषा यदवद्यं प्रच्छादयतःकौकृत्यमुत्पद्यते । कौकृत्याच्चावश्यं दौर्मनस्येन संप्रयोगादस्पर्शविहार इति ।

म्रक्ष अपने पाप को छिपाने को कहते हैं । छन्द द्वेष भय आदि को हटाकर समय पर उसके हितैषियों के द्वारा "तुमने क्या ऐसा किया था'—ऐसा प्रश्न किये जाने पर पाप को छिपाना म्रक्ष है, जो मोह का अंश है । मोह का अंश इसलिए है कि इसमें छिपाने की क्रिया होती है । यह कौकृत्य जनित अस्पर्श ( दुख ) को आश्रय देने वाला होता है । यह स्वाभाविक है कि पाप को छिपाने वाले को कौकृत्य उत्पन्न होता है । कौकृत्य के कारण अवश्य दौर्मनस्य से सम्प्रयोग होने के कारण अस्पर्श विहार होता है ।

**प्रदाशश्चण्डवचोदाशिता। चण्डं वचः प्रगाढं पारुष्यम्। मर्मघट्टनयोगेन दशनशीलो दाशी तद्भावो दाशिता। अयं च भावप्रत्ययः स्वार्थिकः। चण्डेन वचसा प्रदशतीति चण्डवचोदाशिता। अयं च क्रोधोपनाहपूर्वकश्चेतस आघातस्वभाव इति प्रतिघांशिक एव न द्रव्यतो भिद्यते। अयं च वाग्दुश्चरितप्रसवकर्मकः, अस्पर्शविहारकर्मकश्च। तद्वतः पुद्गलस्य दुःखसंवासत्वात्।**

प्रदाश कठोर वचन द्वारा दूसरे को कष्ट देने को कहते हैं। चण्डवचन का अर्थ है, अत्यन्त कठोर वचन। मर्म को कष्ट देने के योग से जो हिंसाशील है, वही दाशी है, उसका जो भाव है वह दाशिता है। यह भाव प्रत्यय स्वार्थिक है। चण्डवचन के द्वारा जो हिंसा करना है, वही चण्डवचोदाशिता है। यह क्रोध और वैर पूर्वक चित्त का आघात स्वभाववाला है। इसलिए यह प्रतिघ का ही अंश है। उससे वस्तुतः भिन्न नहीं है। यह वाणी के दुश्चरित को उत्पन्न करने वाला तथा अस्पर्श विहार करने वाला है। वह जिसको होता है उसका दूसरों के साथ रहना कष्टदायक होता है।

**ईर्ष्या परसंपत्तौ चेतसो व्यारोषः। लाभसत्काराध्यवसितस्य लाभसत्कारकुलशीलश्रुतादीन्गुणविशेषान् परस्योपलभ्य द्वेषांशिकोऽमर्षकृतश्चेतसो व्यारोष ईर्ष्या। स्वमाश्रयं व्याप्य रोषो व्यारोषः। दौर्मनस्यसंप्रयोगात्तत्पूर्वकश्चास्पर्शविहार इति दौर्मनस्यास्पर्शविहारकर्मिकोच्यते।**

दूसरों की सम्पत्ति के प्रति जो चित्त का व्यारोष अर्थात् क्रोध है, उसे ईर्ष्या कहते हैं। लाभसत्कारप्राप्ति की इच्छा वाले मनुष्य के चित्त में दूसरों के अपने से अधिक लाभ, सत्कार, कुल, शील, श्रुत आदि को देख कर द्वेषांशिक अमर्ष के कारण जो क्रोध उत्पन्न होता है, वह ईर्ष्या है। अपने आश्रय को व्याप्त करने वाले क्रोध को व्यारोष कहते हैं। दौर्मनस्य के संयोग के कारण अस्पर्श विहार होता है, अतः उसे दौर्मनस्यजनित अस्पर्शविहार क्रिया वाली कहते हैं।

**मात्सर्यं दानविरोधी चेतस आग्रहः। उपात्तं वस्तु धर्मामिषकौशलात्मकं, येन पूजानुग्रहकाम्ययार्थिने वा दीयते तद् दानम्। तस्मिन्सति दानाभावात्तद्विरोधीत्युच्यते।**

दानविरोधी चित्त के आग्रह को मात्सर्य कहते हैं। ग्रहण किया हुआ पदार्थ धर्मरूप, आमिषरूप तथा कौशलात्मक होता है, जिसके द्वारा पूजा या कृपा की इच्छा से चाहने वाले के लिए या न चाहने वाले के लिए जो दिया



जाता है, वह दान है। मात्सर्य के होने से दान कर्म का अभाव देखे जाने के कारण वह दानविरोधी कहलाता है।

**लाभसत्काराध्यवसितस्य जीवितोपकरणेषु रागांशिकश्चेतस आग्रहोऽपरित्यागेच्छा मात्सर्यम्। इदं चासंलेखसंनिश्रयदानकर्मकम्। असंलेखः पुनर्मात्सर्येणानुपयुज्यमानानामप्युपकरणानां संचयाद्वेदितव्यः।**

लाभसत्कार की इच्छा वाले मनुष्य को जीवनोपयोगी सामग्रियों में आसक्तिपूर्ण चित्त का आग्रह अर्थात् अपरित्याग की जो इच्छा है, उसे मात्सर्य कहते हैं। यह असंलेख को आश्रय प्रदान करता है। मात्सर्य के कारण भोग में न लाये हुए पदार्थों के संचय की प्रवृत्ति को असंलेख कहते हैं।

**माया परवञ्चना याभूतार्थसंदर्शनता। लाभसत्काराध्यवसितस्य परवञ्चनाभिप्रायेणान्यथावस्थितस्य शीलादेरर्थस्यान्यथा प्रकाशना। इयं च सहिताभ्यां रागमोहाभ्यामभूतान्गुणान्प्रकाशयतस्तयोः समुदितयोः प्रज्ञप्यत इति। क्रोधादिवत्प्रज्ञप्तित एव न द्रव्यत इति। मिथ्याजीवसंनिश्रयदानकर्मिका।**

दूसरों को ठगना अर्थात् जो पदार्थ नहीं हो उसको दिखलाने को माया कहते हैं। लाभ सत्कार की इच्छावाले मनुष्य का, दूसरों के ठगने के अभिप्राय से अन्यथा स्थित शील आदि वस्तुओं का अन्यथा प्रकाशन माया है। राग मोह दोनों के मेल से मिथ्या गुणों को प्रकाशित करने के कारण उन दोनों के समुदाय का यह नामान्तर है। क्रोधादि के समान इसका अस्तित्व प्रज्ञप्तिरूप ही है, द्रव्यरूप नहीं। यह मिथ्याजीव को आश्रय प्रदान करती है।

**शाठ्यं स्वदोषप्रच्छादनोपायसंगृहीतं चेतसः कौटिल्यम्। स्वदोषप्रच्छादनोपायः परव्यामोहनम्। तत्पुनरन्येनान्यत्प्रतिसरन्विक्षिपति। अपरिस्फुटं वा प्रतिपद्यते। अत एव शाठ्यं म्रक्षाद्भिद्यते। स हि स्फुटमेव प्रच्छादयति न काका। इदमपि लाभसत्काराध्यवसितोपायाभ्यां रागमोहाभ्यां स्वदोषप्रच्छादनार्थं परव्यामोहनाय प्रवर्तते। तयोरेव सहितयोः प्रज्ञप्यते। इदं च सम्यगववादलाभपरिपन्थिकर्मकम्। सम्यगववादस्य यो लाभो योनिशोमनसिकारस्तस्यान्तरायं करोति।**

अपने दोष को छिपाने के उपाय से संगृहीत चित्त की कुटिलता को शाठ्य कहते हैं। अपने दोष को छिपाने के उपाय का अर्थ है, दूसरों को धोखा देना। दूसरे पदार्थ से दूसरे को बतलाते हुए वह विक्षेप उत्पन्न करता है। इसके कारण स्पष्ट ज्ञान नहीं होता है। अतः शाठ्य म्रक्ष से भिन्न है। वह

तो स्पष्ट ही छिपा देता है, अस्पष्ट नहीं। यह भी लाभसत्कार की इच्छा की उत्पत्ति के कारण राग और मोह से अपने दोष को छिपाने के लिए तथा दूसरों को वञ्चित करने के लिए प्रवृत्त होता है। उन्हीं दोनों के समुदाय का यह नामान्तर है। यह सम्यक् ज्ञान पूर्वक होने वाले ( कार्य कारणभाव पूर्वक ) विचार का विरोधी है। सम्यक् ज्ञान का लाभ जो योनिशः मनसिकार अर्थात् यथार्थ चिन्तन है, उसमें यह विघ्न उत्पन्न करता है।

**मदः स्वसंपत्तौ रक्तस्योद्धर्षश्चेतसः पर्यादानम्। कुलारोग्ययौवनबलरूपैश्वर्यबुद्धिमेधाप्रकर्षः स्वसंपत्तिः। उद्धर्षो हर्षविशेषः। येन हर्षविशेषेण चित्तमस्वतन्त्रीक्रियते तेन तदात्मतन्त्रीकरणात्पर्यात्तं भवतीत्येतदुक्तं चेतसः पर्यादानमिति। अयं च सर्वक्लेशोपक्लेशसंनिश्रयदानकर्मकः।**

अपनी सम्पत्ति में अनुरक्त रागयुक्त पुरुष के चित्त का जो अति हर्ष या प्रफुल्लता है, उसे मद कहते हैं। कुल, आरोग्य, यौवन, बल, रूप, ऐश्वर्य, बुद्धि, तथा मेधा की जो विशेषता ( प्रकर्ष ) है, उसे स्वसम्पत्ति कहते हैं। उद्धर्ष का अर्थ है विशेष हर्ष। जिस हर्ष विशेष से चित्त अपने अधीन नहीं रहता है तथा उस हर्ष के द्वारा यह चित्त उसके वश में कर लिया जाता है, इसी को कहते हैं कि वह चित्त हर्ष से पर्यात्त हो जाता है, यही चित्त का परियादान है। यह सभी क्लेशों एवं उपक्लेशों का आश्रय देने वाला होता है।

**विहिंसा सत्त्वविहेठना। विविधैर्वधबन्धनताडनतर्जनादिभिः सत्त्वानां हिसा विहिंसा। विहेठ्यन्तेऽनया सत्त्वा वधबन्धनादिभिर्दुःखदौर्मनस्योत्पादनादिति सर्वसत्त्वविहेठना। सा पुनः प्रतिघांशिकी निर्घृणता सत्त्वेषु चित्तरूक्षता सत्त्वविहेठनकर्मिका विहिंसेत्युच्यते।**

विहिंसा का अर्थ होता है, प्राणियों को कष्ट देना। अनेक प्रकार के वध, बन्धन, ताड़न, तर्जन आदि से जो प्राणियों की हिंसा है, वही विहिंसा है। वध बन्धन आदि के द्वारा दुःख और दौर्मनस्य की उत्पत्ति कराने से इसके द्वारा सभी प्राणियों को कष्ट पहुँचता है, इसलिए इस हिंसा को सर्व सत्त्व विहेठना कहा जाता है। यह प्रतिघ का अंशरूप निर्दयता है, सत्त्वों के प्रति चित्त की रूक्षता है जो सत्त्वों को विहेठन करने के कारण विहिंसा कहलाती है।

**आह्रीक्यं स्वयमवद्येनालज्जा। तस्मिन्कर्मण्यात्मानमयोग्यं मन्यमानस्यापि यावद्येनालज्जा साह्रीक्यं ह्रीविपक्षभूतम्।**

आह्रीक्य का अर्थ है पाप में स्वयं लज्जित न होना। उस कर्म को करने में अपने आपको अयोग्य मानते हुए भी जो पाप से लज्जित नहीं होना है, वही आह्रीक्य है जो ह्री का विरोधी है।



**अनपत्राप्यं परतोऽवद्येनालज्जा। लोकशास्त्रविरुद्धमेतन्मया क्रियत इत्येवमवगच्छतोऽपि या तया पापक्रिययाऽलज्जा सापत्राप्यविपक्षभूतमनपत्राप्यम्। एतच्च द्वयमपि सर्वक्लेशोपक्लेशसाहाय्यकर्मकम्। रागद्वेषमोहप्रकारेषु सर्वासत्कार्यप्रभवहेतुषु रागद्वेषयोरयौगपद्याद्यथासंभवं प्रज्ञप्यते न तु स्वतन्त्रमस्ति।**

दूसरों के कारण पाप से लज्जित न होना अनपत्राप्य है। मैंने यह काम लोक और शास्त्र के विरुद्ध किया है, ऐसा जानते हुए भी जो पाप कर्म से लज्जित नहीं होता है, वही अनपत्राप्य है, जो अपत्राप्य का विपक्षी है। ये दोनों क्लेश एवं उपक्लेशों के सहायक हैं। राग द्वेष और मोह के विविध प्रकारों में जो सभी असत्कार्यों का जो हेतु है, राग द्वेष एक साथ नहीं हो सकते हैं, अतः यथासंभव राग द्वेष मोह के अन्तर्गत इसे समझना चाहिए, स्वतन्त्ररूप में नहीं।

**स्त्यानं चित्तस्याकर्मण्यता स्तैमित्यम्। स्तिमितस्य भावः स्तैमित्यं यद्योगाच्चित्तं जडीभवति स्तिमितं भवति नालम्बनं प्रतिपत्तुं समुत्सहते। एतच्च सर्वक्लेशोपक्लेशसाहाय्यदानकर्मकम्। मोहांशे प्रज्ञप्तत्वाच्च मोहांशिकमेव न पृथग्विद्यते।**

चित्त की अकर्मण्यता अर्थात् स्तिमितभाव को स्त्यान कहते हैं। स्तिमित के भाव को स्तैमित्य कहते हैं जिसके योग से चित्त जड़ तथा स्तिमित हो जाता है एवं आलम्बन को ग्रहण करने में समर्थ नहीं होता है। यह सभी क्लेशों एवं उपक्लेशों को सहायता देता है। मोह के अंश के रूप में प्रज्ञप्त होने के कारण, यह मोहांशिक है, पृथक् नहीं।

**औद्धत्यं चित्तस्याव्युपशमः। व्युपशमो हि शमथस्तद्विरुद्धोऽव्युपशमः। स पुनरेष रागानुकूलपूर्वहसितरमितक्रीडिताद्यनुस्मरतश्चेतसोऽव्युपशमहेतुः शमथपरिपन्थिकर्मकः।**

चित्त में व्युपशम ( शान्ति ) के अभाव को औद्धत्य कहते हैं। व्युपशम का अर्थ शमथ है, अव्युपशाम उसका विरोधी है। यह राग के अनुकूल पहले के हास्य क्रीड़ा आदि को स्मरण करते हुए चित्त में अशान्ति के कारण रूप उत्पन्न होता है, जो शमथ अर्थात् शान्ति[1]का विरोधी है।

---

१. A. रसित.

आश्रद्धयं कर्मफलसत्यरत्नेष्वनभिसंप्रत्ययः श्रद्धाविपक्षः। श्रद्धा ह्यस्तित्वगुणवत्त्वशक्यत्वेष्वभिसंप्रत्ययः प्रसादोऽभिलाषश्च यथाक्रमम्। अश्रद्धा तद्विपर्ययेणास्तित्वगुणवत्वशक्यत्वेष्वनभिसंप्रत्ययोऽप्रसादोऽनभिलाषश्च। कौसीद्यसंनिश्रयदानकर्मकम्। अश्रद्दधानस्य प्रयोगच्छन्दाभावात्कौसीद्यसंनिश्रयदानकर्मकत्वम्।

कर्मफल सत्य एवं रत्नों में अविश्वास को आश्रद्धय कहते हैं, जो श्रद्धा का विपक्षी है। अस्तित्व, गुणवत्त्व, शक्यत्व में क्रमशः विश्वास प्रसाद तथा अभिलाष को श्रद्धा कहते हैं। उसके विपरीत अस्तित्व, गुणवत्त्व तथा शक्यत्व में क्रमशः अविश्वास, अप्रसाद तथा अनभिलाष को अश्रद्धा कहते हैं। यह कौसीद्य को आश्रय देती है। जिसको श्रद्धा नहीं होती है, उसको प्रयोग की इच्छा नहीं होती है, इस दृष्टि से इसे कौसीद्य का आश्रय प्रदान करने वाली कहा गया है।

कौसीद्यं कुशले चेतसोऽनभ्युत्साहो वीर्यविपक्षः। कुशले कायवाङ्मनःकर्मणि निद्रापार्श्वशयनसुखमागम्य यो मोहांशिकश्चेतसोऽनभ्युत्साहः। एतच्च कुशलपक्षप्रयोगपरिपन्थिकर्मकम्।

कौसीद्य कुशल कर्म में अनुत्साह का नाम है, जो वीर्य का विपक्षी है। शरीर, वाणी और मन से होने वाले कुशल कर्म में निद्रा तथा शयन सुख को प्राप्त करके जो मोहजनित चित्त का अनुत्साह है, वही कौशीद्य है। यह कुशलपक्ष के प्रयोग का विरोध करने वाला है।

प्रमादो यैर्लोभद्वेषमोहकौसीद्यैः क्लेशाद्रागद्वेषमोहादिकाच्चित्तं न रक्षति कुशलं च तत्प्रतिपक्षभूतं न भावयति। तेषु लोभद्वेषमोहकौसीद्येषु प्रमादः प्रज्ञप्यते। अयं चाकुशलवृद्धिकुशलपरिहाणिसंनिश्रयदानकर्मकः।

जिन लोभ, द्वेष, मोह और कौसीद्य के कारण मनुष्य रागद्वेषादि क्लेशों से अपने चित्त की रक्षा नहीं करता है तथा उनके प्रतिपक्षभूत कुशल की भावना नहीं करता है, उसे प्रमाद कहते हैं। उन लोभ द्वेष मोह तथा कौसीद्य में प्रमाद का कथन होता है। यह अकुशल वृद्धि तथा कुशल हानि को आश्रय प्रदान करता है।

मुषिता स्मृतिः क्लिष्टा स्मृतिः। क्लिष्टेति क्लेशसंप्रयुक्ता। इयं च विक्षेपसंनिश्रयदानकर्मिका।

मुषित स्मृति क्लिष्ट स्मृति का नाम है। क्लिष्ट का अर्थ है क्लेश से युक्त। यह विक्षेप को आश्रय प्रदान करती है।



विक्षेपो रागद्वेषमोहांशिकश्चेतसो विसारः। विविधं क्षिप्यतेऽनेन चित्तमिति विक्षेपः। यै रागद्वेषमोहैश्चित्तं समाध्यालम्बनाद्बहिः क्षिप्यते तेषु यथासंभवं विक्षेपः प्रज्ञप्यते। एष च वैराग्यपरिपन्थिकर्मकः।

रागद्वेष और मोह के कारण चित्त का विविध विषयों में जाना विक्षेप कहलाता है। जिसके द्वारा चित्त विविध विषयों में फेंका जाता है, उसे विक्षेप कहते हैं। जिन राग द्वेष मोह द्वारा चित्त समाधि के आलम्बन से बाहर फेंक दिया जाता है, उन्हीं में यथा संभव विक्षेप शब्द का व्यवहार होता है। यह वैराग्य का विरोधी है।

असंप्रजन्यं क्लेशसंप्रयुक्ता प्रज्ञा। यया संविदिता कायवाक्चित्तचर्या अतिक्रमप्रक्रमादिषु वर्तते करणीयाकरणीयाज्ञानात्। एतच्चापत्तिसंनिश्रयदानकर्मकम्।

क्लेशयुक्त प्रज्ञा को असंप्रजन्य कहते हैं। जिसके द्वारा जानी हुई शरीर वाणी और चित्त की क्रिया अतिक्रम प्रक्रम आदि में प्रवृत्त होती है क्योंकि उससे कर्त्तव्याकर्त्तव्य का ज्ञान नहीं होता है। यह आपत्ति को आश्रय प्रदान करने वाला है।

कौकृत्यं चेतसो विप्रतिसारः। कुत्सितं कृतमिति कुकृतम्। तद्भावः कौकृत्यम्। इह तु कुकृतविषयश्चेतसो विलेखः कौकृत्यं चैतसिकाधिकारात्। एतच्च चित्तस्थितिपरिपन्थिकर्मकम्।

चित्त के विप्रतिसार को कौकृत्य कहते हैं। कुत्सित कर्म कुकृत्य है। उसका भाव कौकृत्य है। यहाँ कुकृत्य विषयक चित्त का जो आग्रह है, वही कौकृत्य समझा गया है क्योंकि यहाँ चेतसिक का प्रकरण है। यह चित्त की एकाग्रता का विरोधी है।

मिद्धमस्वतन्त्रवृत्तिचेतसोऽभिसंक्षेपः। वृत्तिरालम्बने प्रवृत्तिः। साऽस्वतन्त्रा चेतसो यतो भवति तन्मिद्धम्। कायचित्तसंधारणासमर्था वा वृत्तिश्चेतसोऽस्वतन्त्रता सा यतो भवति तन्मिद्धम्। अभिसंक्षेपश्चेतसश्चक्षुरादीन्द्रियद्वारेणाप्रवृत्तिः। एतच्च मोहांशे प्रज्ञपनान्मोहांशिकं कृत्यातिपत्तिसंनिश्रयदानकर्मकं च।

अस्वतन्त्रवृत्तिचित्त के संकोच को मिद्ध कहते हैं। वृत्ति का अर्थ है आलम्बन में प्रवृत्ति। वह चित्त की प्रवृत्ति जिसके द्वारा अस्वतन्त्र हो जाती है, वही मिद्ध है। अथवा शरीर और चित्त को धारण करने में असमर्थ जो वृत्ति है, वही चित्त की अस्वतन्त्रता है, वह जिससे होती है वही मिद्ध है। चित्त

की चक्षु आदि इन्द्रियों के द्वारा जो अप्रवृत्ति है, वही अभिसंक्षेप है। यह मोह के अंश में व्यवहृत होने से मोहांशिक तथा कर्तव्य की असिद्धि को आश्रय प्रदान करने वाला है।

वितर्कः पर्येषको मनोजल्पः प्रज्ञाचेतनाविशेषः। पर्येषकः किमेतदिति निरूपणाकारप्रवृत्तः। मनसो जल्पो मनोजल्पः। जल्प इव जल्पः। जल्पोऽर्थकथनम्। 'चेतनाप्रज्ञाविशेष इति', चेतनायाश्चित्तपरिस्पन्दात्मकत्वात्, प्रज्ञायाश्च गुणदोषविवेकाकारत्वात्तद्वशेन चित्तप्रवृत्तिः, कदाचिच्चित्तचेतनयोर्वितर्कप्रज्ञप्तिः। कदाचित्प्रज्ञाचेतसोर्यथाक्रममनभ्यूहाभ्यूहावस्थयोः। अथ वा चेतनाप्रज्ञयोरेव वितर्कप्रज्ञप्तिस्तद्वशेन चित्तस्य तथाप्रवृत्तत्वात्। स एव चित्तस्यौदारिकता। औदारिकतेति स्थूलता वस्तुमात्रपर्येषणाकारत्वात्। एष च नयो विचारेऽपि द्रष्टव्यः।

अनुसंधान करने वाली मानसिक क्रिया को वितर्क कहते हैं, जो प्रज्ञा तथा चेतना का विशेष गुण है। 'यह क्या है', इस प्रकार अनुसन्धान के आकार की प्रवृत्ति को पर्येषक कहते हैं। मन का जल्प (कथन) मनोजल्प है। जल्प जैसा होने के कारण जल्प है। जल्प का अर्थ किसी बात का कथन है। चेतना तथा प्रज्ञा का विशेष गुण है क्योंकि चेतना चित्तपरिस्पन्दात्मक है तथा प्रज्ञा गुण दोष विवेकात्मक है, उसके कारण चित्त की प्रवृत्ति होती है। कभी कभी चित्त तथा चेतना के लिए वितर्क शब्द का प्रयोग होता है तथा कभी प्रज्ञा तथा चित्त के लिए, क्रमशः अनभ्यूह तथा अभ्यूह अवस्था में (अर्थात अनभ्यूह अवस्था में चित्त और चेतना के लिए तथा अभ्यूह अवस्था में प्रज्ञा तथा चित्त के लिए)। अथवा चेतना और प्रज्ञा में ही वितर्क शब्द का व्यवहार है क्योंकि उसी के कारण चित्त की वैसी प्रवृत्ति होती है। वही चित्त की औदारिकता है। औदारिकता का अर्थ स्थूलता है क्योंकि उसमें वस्तु मात्र के अनुसन्धान का आकार रहता है। इसी न्याय से विचार के अन्तर्गत भी समझना चाहिए।

विचारोऽपि हि चेतनाप्रज्ञाविशेषात्मकः प्रत्यवेक्षको मनोजल्प एव। इदं तदिति पूर्वाधिगतनिरूपणात्। अत एव च चित्तसूक्ष्मतेत्युच्यते। एतौ च स्पर्शास्पर्शविहारसंनिश्रयदानकर्मकौ। अनयोश्चौदारिकसूक्ष्मतया व्यवस्थापनात्पृथक्करणम्।

विचार भी प्रज्ञाचेतनाविशेषात्मक प्रत्यवेक्षक मनोजल्प ही है। क्योंकि 'यह वही है' (ऐसा) पूर्व ज्ञात वस्तु का (इसमें) निश्चय होता है। इसलिए वह चित्त की सूक्ष्मता कहलाता है। ये दोनों (वितर्क विचार) स्पर्श विहार



तथा अस्पर्श विहार का आश्रय प्रदान करने वाले हैं। इन दोनों का औदारिक और सूक्ष्म रूप में पार्थक्य है।

द्वये द्विधेति। द्वयं च द्वयं च द्वये। ते पुनः कौकृत्यमिद्धे वितर्कविचारौ च। एते च चत्वारो धर्मा द्विधा क्लिष्टा अक्लिष्टाश्च। तत्राकुशलमकृत्वा कुशलं च कृत्वा यश्चेतसो विलेखस्तत्संक्लिष्टं कौकृत्यम्। यत्कुशलमकृत्वा तत्कौकृत्यमक्लिष्टम्। मिद्धमपि क्लिष्टचित्ताविद्धं क्लिष्टचित्तसंप्रयुक्तं च क्लिष्टम्। अक्लिष्टचित्ताविद्धमक्लिष्टचित्तसंप्रयुक्तं चाक्लिष्टम्। कामव्यापादविहिंसादिवितर्काः क्लिष्टाः। नैष्कर्म्यादिवितर्का अक्लिष्टाः। एवं परोपघातोपायविचारः क्लिष्टः। परानुग्रहोपायविचारोऽक्लिष्टः। तत्र ये कौकृत्यमिद्धवितर्कविचाराः क्लिष्टाः त एवोपक्लेशा नेतरे।

दोनों युगल दो प्रकार के हैं। (उपर्युक्त) दो दो का अर्थ है चार। वे हैं—कौकृत्य, मिद्ध, वितर्क और विचार। ये चारो धर्म दो दो प्रकार के हैं—क्लिष्ट एवं अक्लिष्ट। उनमें अकुशल कर्म को न करके तथा कुशल कर्म को करके जो चित्त का विलेख (विषाद) है वह संक्लिष्ट कौकृत्य है। कुशल कर्म को न करके जो चित्त का विलेख है वह अक्लिष्ट कौकृत्य है। मिद्ध भी जो क्लिष्टचित्ताविद्ध तथा क्लिष्टचित्त सम्प्रयुक्त है, उसे क्लिष्ट कहते हैं। अक्लिष्ट चित्ताविद्ध तथा अक्लिष्टचित्त सम्प्रयुक्त (मिद्ध) अक्लिष्ट है। काम व्यापाद विहिंसादि के वितर्क क्लिष्ट हैं। नैष्कर्म्य आदि के वितर्क अक्लिष्ट हैं। इसी प्रकार दूसरों की विहिंसा के उपाय का विचार क्लिष्ट है तथा दूसरों के अनुग्रह के उपाय का विचार अक्लिष्ट है। उनमें जो क्लिष्ट कौकृत्य, मिद्ध, वितर्क और विचार हैं—वे ही उपक्लेश हैं, दूसरे नहीं।

तत्र यथा रूपशब्दाद्युपलब्धिः षट्प्रकारा यथासंभवं सर्वचैतसिकैः संप्रयुज्यते, सर्वत्रगैर्विनियतैः कुशलैः क्लेशैरुपक्लेशैश्च, एवं त्रिवेदना तिसृभिश्च वेदनाभिः संप्रयुज्यते सुखया दुःखया अदुःखासुखया च। सौमनस्यदौर्मनस्योपेक्षास्थानीयेषु रूपादिषु तदुत्पत्तेः कुशला अकुशला अव्याकृता च। आलयविज्ञानं तु सर्वत्रगैः पञ्चभिरेव संप्रयुज्यते नान्यैस्तत्र चोपेक्षैव वेदना अनिवृताव्याकृतं च। क्लिष्टं मनः सर्वत्रगैः पञ्चभिश्चतुर्भिश्च क्लेशैरात्ममोहादिभिः। तत्रोपेक्षैव वेदना निवृताव्याकृतं चेति।

उनमें (यथा) रूपशब्दादि की छ प्रकार की उपलब्धियां यथासंभव सभी चैतसिकों से सम्प्रयुक्त होती हैं, अर्थात सर्वत्रग विनियत कुशल क्लेश तथा

उपक्लेशों के साथ, उसी प्रकार वे त्रिवेदना कही गयी है, क्योंकि वे तीन वेदनाओं के साथ सम्प्रयुक्त होती हैं—सुख दुःख तथा उपेक्षा के साथ। सौमनस्यस्थानीय, दौर्मनस्यस्थानीय तथा उपेक्षास्थानीय रूपादि में उनकी उत्पत्ति होने से वे उपलब्धियां कुशल अकुशल तथा अव्याकृत हैं। आलय बिज्ञान सर्वत्रग पांच चैतसिकों से ही सम्प्रयुक्त होता है अन्यों से नहीं तथा वहां उपेक्षा वेदना ही रहती है तथा वह अनिवृताव्याकृत ही। क्लिष्टमन सर्वत्रग पांच चैतसिकों से तथा चार आत्ममोहादि क्लेशों से सम्प्रयुक्त होता है। उसमें उपेक्षा वेदना ही है और वह निवृताव्याकृत है।

**इदमिदानीं चिन्त्यते। किं पञ्चानां चक्षुर्विज्ञानादीनां युगपदालम्बनप्रत्ययसांनिध्येऽप्यालयविज्ञानादेकस्यैवोत्पत्तिर्भवति न द्वयोर्न बहूनां वा? यथैके मन्यन्ते 'न द्वयोर्न बहूनां वा युगपत्समनन्तरप्रत्ययाभावादेकस्यैव विज्ञानस्योत्पत्तिर्भवति। न चैकं विज्ञानं बहूनां समनन्तरप्रत्ययत्वं प्रतिपत्तुमुत्सहते'। उतानियमेन?**

अब यहां विचार किया जाता है। क्या चक्षुविज्ञानादि पांचों विज्ञानों के आलम्बन और कारणों के एक साथ विद्यमान रहने पर भी आलयविज्ञान से एक साथ एक ही विज्ञान की उत्पत्ति होती है, दो या बहुतों की नहीं? जैसा कुछ लोग मानते हैं—'दो या बहुत के समनन्तर प्रत्यय के एक साथ न होने के कारण एक ही विज्ञान की उत्पत्ति होती है। एक ही विज्ञान बहुतों का समनन्तरप्रत्यय एक साथ नहीं बन सकता है। अथवा अनियम से?

**यद्येकस्यैव प्रत्ययसांनिध्यमेकमेवोत्पद्यते, एवं द्वयोर्बहूनां च प्रत्ययसांनिध्ये उत्पत्तिर्भवतीत्यत आह।**

जिस प्रकार एक विज्ञान के कारण के सन्निहित होने पर एक ही विज्ञान उत्पन्न होता है उसी प्रकार कारणों के सन्निहित होने पर दो या बहुतों की भी उत्पत्ति हो सकती है, इस प्रश्न का समाधान करते हुए कहा गया है—

( १५ )

**पञ्चानां मूलविज्ञाने यथाप्रत्ययमुद्भवः।**
**विज्ञानानां सह न वा तरङ्गाणां यथा जले॥ १५॥**

( १५ )

'मूल विज्ञान में कारणों के सानिद्धयक होने से पांचो विज्ञानों की एक साथ उत्पत्ति हो सकती है और पृथक् पृथक् भी, यथा जल में तरंगों की'॥ १५॥



**पञ्चानामिति चक्षुरादिविज्ञानानां तदनुचरमनोविज्ञानसहितानाम्। पञ्चानां चक्षुरादिविज्ञानानां बीजाश्रयत्वात्तत उत्पत्तेर्गतिषु जन्मोपादानाच्चालयविज्ञानं मूलविज्ञानमित्युच्यते।**

पांचो का अर्थ है चक्षुविज्ञानादि विज्ञानों का तथा उसके अनुचर मनोविज्ञान के सहित। चक्षुविज्ञानादि पांचों विज्ञानों का बीज एवं आश्रय होने से तथा उत्पत्ति उसी से उनकी होने से तथा विविध गतियों में जन्म का उपादान कारण होने से आलयविज्ञान मूल विज्ञान कहलाता है।

**'यथाप्रत्ययमुद्भव' इति, यस्य यस्य यः प्रत्ययः संनिहितस्तस्य तस्य नियमेनोद्भव आत्मलाभः। सह न वेति, युगपत्क्रमेण वा। तरङ्गाणां यथा जल इति, आलयविज्ञानात्—प्रवृत्तिविज्ञानानां युगपदयुगपच्चोत्पत्तौ दृष्टान्तः। यथोक्तम्। तद्यथा विशालमते, महत उदकौघस्य वहतः सचेदेकस्य तरङ्गस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवत्येकमेव तरङ्गं प्रवर्तते। सचेद्द्वयोस्त्रयाणां संबहुलानां तरङ्गाणामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति। यावत्संबहुलानि तरङ्गाणि प्रवर्तन्ते। न च तस्योदकौघस्य स्रोतसा वहतः समुच्छित्तिर्भवति। न पर्युपयोगः प्रज्ञायते। एवमेव विशालमते, तदोघस्थानीयमालयविज्ञानं संनिश्रित्य प्रतिष्ठाय सचेदेकस्य [1]चक्षुर्विज्ञानस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, एकमेव चक्षुर्विज्ञानं प्रवर्तते। सचेद्द्वयोस्त्रयाणां सचेत्पञ्चानां विज्ञानानामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, सकृद्यावत्पञ्चानां प्रवृत्तिर्भवति। अत्र गाथा—**

'यथा प्रत्यय समुद्भव' का अर्थ है—जिसके जिसके कारण के सानिध्य से उसकी उसकी नियमतः उत्पत्ति। 'सह न वेति' का अभिप्राय यह है कि—एक साथ भी तथा क्रम से भी। जैसे जल में तरंगों की उत्पत्ति होती है, (उसी प्रकार) आलयविज्ञान से प्रवृत्ति विज्ञानों की युगपत् या अयुगपत् उत्पत्ति होने का यह दृष्टान्त है। जैसे कहा गया है। यथा हे विशालमते, जल के बहुत बड़े प्रवाह में एक तरंग का कारण उपस्थित रहने पर एक ही तरंग उत्पन्न होता है। दो या तीन या बहुत से तरंगों की उत्पत्ति के कारण यदि उपस्थित हों तो बहुत से तरंग उत्पन्न होते हैं। उस जल के प्रवाह का कभी समुच्छेद नहीं होता है। न उसकी समाप्ति होती है। उसी प्रकार हे विशालमते, उस प्रवाह के समान आलयविज्ञान के आश्रय से यदि एक चक्षु विज्ञान की उत्पत्ति का कारण उपस्थित रहता है तो एक ही

---

1. C. adds।

चक्षुविज्ञान प्रवृत्त होता है। यदि दो तीन या पांचों विज्ञानों की उत्पत्ति के कारण विद्यमान रहते हैं तो एक साथ पांचों विज्ञानों की उत्पत्ति होती है। इस विषय में गाथा है—

**आदानविज्ञानगभीरसूक्ष्मो ओघो यथा वर्तति सर्वबीजो।**
**बाला एषामपि [1]न प्रकाशिते[2] मोहैव[3] आत्मा परिकल्पयेयुः ॥ इति।**

'यह आलयविज्ञान गंभीर एवं सूक्ष्म है, जल के प्रवाह के समान है तथा सभी विज्ञानों का बीज है। अज्ञानी लोग उसे न समझकर मोहवश आत्मा की कल्पना करते हैं'।

**न हि विज्ञानप्रतिनियमेनालम्बनप्रत्ययवत्समनन्तरप्रत्यय इष्यते। सर्वविज्ञानोत्पत्तौ सर्वस्य विज्ञानस्य तत्समनन्तरप्रत्ययत्वाभ्युपगमात्। अत एकस्मादपि समनन्तरप्रत्ययादालम्बनप्रत्ययसांनिध्ये द्वयोर्बहूनां च[4] विज्ञानानामुत्पत्तिर्न विरुध्यते। किं चात्र कारणं यत्समनन्तरप्रत्ययप्रतिनियमाभावे पञ्चानां च युगपदालम्बनप्रत्ययसांनिध्ये एकेनैवोत्पत्तव्यं न पञ्चभिरपीति? तस्मादालम्बनसद्भावे पञ्चानामपि चोत्पत्तिरभ्युपेयम्।**

आलम्बनप्रत्यय के समान समनन्तर प्रत्यय से एक ही विज्ञान उत्पन्न होता है, ऐसा मानना अभीष्ट नहीं है। सभी विज्ञानों की उत्पत्ति में सभी विज्ञान समनन्तरप्रत्यय के रूप में कारण माने गये हैं। अतः एक भी समनन्तरप्रत्यय से आलम्बन और कारणों के सन्निहित होने पर दो या बहुत से विज्ञानों की उत्पत्ति हो सकती है। इसमें क्या कारण है कि जब समनन्तरप्रत्यय का कोई नियम नहीं है और पांचों विज्ञानों का आलम्बन और कारण एक साथ उपस्थित हों तो एक ही विज्ञान उत्पन्न हो पांचों विज्ञान उत्पन्न न हों? अतः आलम्बन के होने पर पांचों विज्ञानों की उत्पत्ति हो सकती है, ऐसा जानना चाहिए।

( १६ )

**इदमिदानीं वक्तव्यं किं मनोविज्ञानं चक्षुरादिविज्ञानैः सह प्रवर्तते विना वा उत नैव? इत्यत आह—**

( १६ )

अब यहां यह बतलाना चाहिए—क्या मनोविज्ञान चक्षुविज्ञान आदि के साथ ही प्रवृत्त होता है या उसके विना ही या होता ही नहीं! अतः कहा गया है—

---

१. C. बालान एषो मयि। २. C. प्रकाशितो। ३. C. मा हैव। ४. C. व।



**मनोविज्ञानसंभूतिः सर्वदासंज्ञिकादृते।**
**समापत्तिद्वयान्मिद्धान्मूर्छनादप्यचित्तकात् ॥ १६ ॥**

मनोविज्ञान की उत्पत्ति सर्वदा आसंज्ञिक, असांज्ञिकसमापत्ति, निरोधसमापत्ति, अचित्तकमिद्ध, और अचित्तकमूर्छा को छोड़कर चक्षु आदि विज्ञानों के साथ भी या पृथक् भी होती है ॥ १६ ॥

**इति। सर्वदेति सर्वकालं, चक्षुरादिविज्ञानैः सह विना वेत्यर्थः। अस्योत्सर्गस्यापवादमारभते। 'आसंज्ञिकादृते। 'समापत्तिद्वयान्मिद्धान्मूर्छनादप्यचित्तकाद्' इति, तत्रासंज्ञिकमसंज्ञिसत्त्वेषु देवेषूपपन्नस्य यश्चित्तचैतसिकानां धर्माणां निरोधः। समापत्तिद्वयमसंज्ञिसमापत्तिर्निरोधसमापत्तिश्च।**

सर्वदा का अर्थ है सर्वकाल अर्थात् चक्षुविज्ञान आदि के साथ भी और उनके विना भी। इस सामान्य विधान के अपवाद को बतलाना आरम्भ किया जाता है। 'आसंज्ञिकादृते। समापत्तिद्वयान्मिद्धान्मूर्छनादप्यचित्तकाद्' इति (असंज्ञी, दो समापत्तियों, मिद्ध, चित्तरहितमूर्छा को छोड़ कर)। उनमें असांज्ञिक का अर्थ असंज्ञीसत्त्वों तथा देवताओं में उत्पन्न चित्त चैतसिक धर्मों का निरोध है। समापत्ति दो प्रकार की होती है—असांज्ञिकसमापत्ति और निरोधसमापत्ति।

**तत्रासंज्ञिसमापत्तिस्तृतीयध्यानाद्वीतरागस्य [1]ऊर्ध्वमवीतरागस्य निःसरणसंज्ञापूर्वकेण मनसिकारेण मनोविज्ञानस्य तत्संप्रयुक्तानां च चैत्तानां यो निरोधः सोऽत्रासंज्ञिसमापत्तिरित्युच्यते। निरुध्यतेऽनेनेति निरोधः। स पुनः ससंप्रयोगस्य मनोविज्ञानस्य समुदाचारनिरोधः आश्रयस्यावस्थाविशेषः। स च समापत्तिचित्तादनन्तरं चित्तान्तरोत्पत्तिविरुद्ध आश्रयः प्राप्यत इति समापत्तिरित्युच्यते।**

जो तृतीय ध्यान से वीतराग है तथा उसके ऊपर की अवस्था से अवीतराग है, ऐसे निःसरणसंज्ञापूर्वक मनसिकार के द्वारा जो मनोविज्ञान तथा उससे सम्प्रयुक्त चैत्यों का जो निरोध है, वह असंज्ञीसमापत्ति कही जाती है। इससे निरुद्ध होता है, अतः इसे निरोध कहते हैं। वह पुनः विषय सहित (ससंप्रयोग) मनोविज्ञान के कार्य (समुदाचार) का जो निरोध है, वह आश्रय अर्थात् आलयविज्ञान की एक अवस्थाविशेष है। समापत्ति अवस्था में व्याप्त चित्त के

---

१. A. नोर्ध्व।

अनन्तर अन्य चित्त के विरुद्ध आश्रय की प्राप्ति होने के कारण इसे समापत्ति कहते हैं।

**निरोधसमापत्तिराकिंचन्यायतनवीतरागस्य शान्तिविहारसंज्ञापूर्वकेण मनसिकारेंण ससंप्रयोगस्य मनोविज्ञानस्य क्लिष्टस्य च मनसो यो निरोधः। इयमप्यसंज्ञिसमापत्तिवदाश्रयस्यावस्थाविशेषे प्रज्ञप्यते।**

जो आकिञ्चन्यायतन से वीतराग है, उसके शान्तविहारसंज्ञापूर्वक मनसिकार से विषयसहित मनोविज्ञान तथा क्लिष्ट मन के निरोध को निरोधसमापत्ति कहते हैं। यह भी असंज्ञीसमापत्ति के समान आश्रय अर्थात् आलयविज्ञान की अवस्था विशेष है।

**अचित्तकं मिद्धं गाढमिद्धोपहतत्वादाश्रयस्य तावत्कालं मनोविज्ञाना-प्रवृत्तेरचित्तकमित्युच्यते।**

अचित्तकमिद्ध ( के क्षण ) आलय को गाढ़ आलस्य से उपहत होने के कारण ( उसमें ) उस समय तक मनोविज्ञान की उत्पत्ति नहीं होती है, अतः अचित्तक-मिद्ध कहलाता है।

**अचित्तिका मूर्च्छा। आगन्तुनाभिघातेन वातपित्तश्लेष्मवैषम्येण वा यदाश्रयवैषम्यं मनोविज्ञानप्रवृत्तिविरुद्धं, तत्राचित्तिका मूर्छोपचर्यते।**

अचित्तक मूर्च्छा। आगन्तुक अभिघात, वात पित्त तथा कफ की विषमता से जो मनोविज्ञान की प्रवृत्ति के विरुद्ध आश्रय की विषमता है, उसी के लिए अचित्तक मूर्च्छा शब्द का व्यवहार होता है।

**एताः पञ्चावस्था वर्जयित्वा तदन्यासु सर्वास्ववस्थासु मनोविज्ञान-प्रवृत्तिर्वेदितव्या। एवमासंज्ञिकादिषु मनोविज्ञाने निरुद्धे तदपगमे पुनः कुत उत्पद्यते, यत्तस्य कालक्रिया न भवति? तत्पुनरालयविज्ञानादे-वोत्पद्यते तद्धि सर्वविज्ञानबीजकमिति।**

इन पांच अवस्थाओं को छोड़कर अन्य सभी अवस्थाओं में मनोविज्ञान की प्रवृत्ति जाननी चाहिए। इस प्रकार आसंज्ञिक आदि में मनोविज्ञान के निरुद्ध होने पर, उसके हट जाने पर वह पुनः उत्पन्न कहां से होता है जिससे उसका सर्वथा विनाश नहीं होता है'? वह आलयविज्ञान से उत्पन्न होता है क्योंकि वह सभी विज्ञानों का बीज है।

( १७ )

**यत्र विज्ञानपरिणामे आत्मधर्मोपचारः, स पुनस्त्रिधेत्युद्दिश्य विस्त-रेण त्रिविधोऽपि निर्दिष्टः। इदानीमात्मधर्मोपचारो यः प्रज्ञप्यते स**



**विज्ञानपरिणाम एव, न विज्ञानपरिणामात् स पृथगस्त्यात्मा धर्मो वेति यत्प्रतिज्ञातं तत्प्रसाधनार्थमाह—**

( १७ )

जिस विज्ञान के परिणाम में आत्मा और धर्म का उपचार होता है, वह परिणाम तीन प्रकार का है, ऐसा उल्लेख करके उन तीनों प्रकारों का विस्तार से कथन कर दिया गया। अब—'आत्मा और धर्म का जो उपचार होता है वह विज्ञान परिणाम ही है, विज्ञान परिणाम से भिन्न आत्मा या धर्म का अस्तित्व नहीं है'—यह जो प्रतिज्ञा की थी उसको सिद्ध करने के लिए कहते है—

**विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते।**
**तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम्॥ १७॥**

'जो कुछ विकल्प किया जाता है, वह विज्ञान परिणाम ही है। अतः वे ( बाह्य विषयादि ) नहीं हैं सब कुछ विज्ञप्ति मात्र है'॥ १७॥

**इति। योऽयं विज्ञानपरिणामस्त्रिविधोऽनन्तरमभिहितः सोऽयं विक-ल्पः। अध्यारोपितार्थाकाराः त्रैधातुकाश्चित्तचैत्ता विकल्प उच्यते। यथो-क्तम्—"अभूतपरिकल्पस्तु चित्तचैत्तास्त्रिधातुकाः" इति। तेन त्रिविधेन विकल्पेनालयविज्ञानक्लिष्टमनः प्रवृत्तिविज्ञानस्वभावेन ससंप्रयोगेण यद्विकल्प्यते भाजनमात्मा स्कन्धधात्वायतनरूपशब्दादिकं वस्तु तन्ना-स्तीत्यतः स विज्ञानपरिणामो विकल्प उच्यते। असदालम्बनत्वात्।**

यह जो विज्ञान का परिणाम तीन प्रकार का कहा गया है वही विकल्प है। अध्यारोपितविषय के आकार में उपलब्ध त्रैधातुक ( कामधातु, रूपधातु, तथा अरूपधातु ) चित्त चैतसिकों को विकल्प कहते हैं। यथा कहा गया है:—'ये त्रैधा-तुक चित्त कैतसिक धर्म अयथार्थ ( अभूत ) तथा परिकल्पित ( कल्पनामात्र ) हैं'। इसप्रकार त्रिविध विकल्प अर्थात् आलयविज्ञान, क्लिष्टमन तथा प्रवृत्तिविज्ञान के स्वभाव तथा उनके संप्रयोग से जो विकल्प किये जाते हैं, वे भाजन लोक, आत्मा, स्कन्ध, धातु, आयतन, रूप, शब्द आदि वस्तु यथार्थ नहीं हैं, वे सभी विज्ञान परिणाम हैं, जो कल्पना मात्र है।

**कथं पुनरेतद्विज्ञायते तदालम्बनम् असदिति। यद्धि यस्य कारणं तस्मिन्समग्रे चाविरुद्धे च तदुत्पद्यते नान्यतः। विज्ञानं च माया गन्धर्व-नगरस्वप्नतिमिरादावसत्यालम्बने[1] जायते। यदि च विज्ञानस्यालम्बन-**

---

१. C. असत्यप्याल—।

प्रतिबद्ध उत्पादः स्यात् एवं सति मायादिष्वर्थाभावान्न विज्ञानमुत्पद्यते। तस्मात् पूर्वकान् निरुद्धात् तज्जातीयविज्ञानाद् विज्ञानमुत्पद्यते,[1] न बाह्यादर्थात् तस्मिन्नसत्यपि भावात्[2]।

पुनः यह कैसे जाना जाता है कि उसका आलम्बन असत है? जो जिसका कारण होता है उसके समग्र और अविरुद्ध होने पर उत्पन्न होता है, दूसरों से नहीं। विज्ञान माया गन्धर्वनगर स्वप्न तिमिरादि में आलम्बन के न होने पर भी उत्पन्न होता है। यदि विज्ञान की उत्पत्ति आलम्बन पर निर्भर होती तब तो मायादि में वस्तु (विषय) के न रहने पर विज्ञान उत्पन्न नहीं होता। अतः पूर्व विज्ञान के नष्ट होने पर तद् जातीय विज्ञान से अन्य विज्ञान उत्पन्न होता है, बाह्यपदार्थ से नहीं क्योंकि उसके न होने पर भी विज्ञान होता है।

दृष्टा चाभिन्नेऽप्यर्थे प्रतिपत्तॄणां परस्परविरुद्धा प्रतिपत्तिः। न चैकस्य परस्परविरुद्धानेकात्मकत्वं युज्यते। तस्मात् अध्यारोपितरूपत्वाद् विकल्पस्यालम्बनम् असदिति प्रतिपत्तव्यम्।

एक ही पदार्थ में उसका अनुभव करनेवालों में परस्पर विरुद्ध अनुभव देखे जाते हैं। एक वस्तु का परस्पर विरुद्ध अनेक रूपवाला होना युक्त नहीं है। अतः अध्यारोपित रूपवाला होने से विकल्प का आलम्बन असत् है—ऐसा समझना चाहिए।

अनेन तावत् समारोपान्तं परिहृत्यापवादान्त परिजिहीर्षया आह— 'तेनेदं सर्वं विज्ञप्तिमात्रकम्'। इति।

इस कथन से समारोपान्त का परिहार करके अपवादान्त के परिहार की इच्छा से कहा गया है—

'इस कारण से सब कुछ विज्ञप्तिमात्र' है।

तेनेति तस्मात्। यस्मात् परिणामात्मकेन विकल्पेन यद्विकल्प्यते। तेन तन्नास्ति। तस्माद् विषयाभावात सर्वं विज्ञप्तिमात्रकम्। सर्वमिति त्रैधातुकमसंस्कृतं च। मात्रशब्दस्तदधिकविषयव्यवच्छेदार्थः। ककारः पादपूरणार्थः।

'तेनेति' का अर्थ है उस कारण से। यस्मात् यह परिणामात्मक विकल्प से होता है, अतः वह (वस्तुतः) नहीं है। अतः विषय के अभाव में यह सब कुछ विज्ञप्तिमात्र है। 'सर्वमिति' का अर्थ त्रैधातुक (कामधातु, रूपधातु, तथा अरूपधातु) तथा असंस्कृत है। 'मात्र' शब्द यहां उससे अधिक विषय के व्यवच्छेद के लिए है। ककार पाद पूरणार्थ है।

१. C. उत्पद्येत।
२. C. उद्भावात (?)



( १८ )

यदि सर्वं विज्ञप्तिमात्रकमेव न ततोऽन्यः कर्ता 'कारणं वास्ति, कथं मूलविज्ञानाद् अनधिष्ठिताद् असति करणे विकल्पाः प्रवर्तन्त इत्याह—

( १८ )

यदि सब कुछ विज्ञप्तिमात्र ही है, न उससे भिन्न कर्ता ही है, न करण ही तो अधिष्ठान तथा करण के बिना मूलविज्ञान से विकल्प कैसे प्रवृत्त होते हैं? इस प्रश्न का समाधान करते हुए कहा गया है:—

सर्वबीजं हि विज्ञानं परिणामस्तथा तथा।
यात्यन्योन्यवशाद् येन विकल्पः स स जायते ॥ १८ ॥

सब का बीज विज्ञान है। अन्योन्य वश से उस उस प्रकार के परिणाम होते हैं और उसी के कारण विकल्प भी उत्पन्न होते हैं ॥ १८ ॥

तत्र सर्वधर्मोत्पादनशक्त्यनुगमात् सर्वबीजम्। विज्ञानमित्यालयविज्ञानम्। विज्ञानं ह्यसर्वबीजमप्यस्तीति, अतः सर्वबीजमित्याह। विज्ञानाद् अन्यदपि केचित् प्रधानादि सर्वबीजं कल्प्यत-इति विज्ञानमित्याह। अथ वा एकपदव्यभिचारेऽपि विशेषणविशेष्यत्वदर्शनान् नायं दोषः।

सभी धर्मों को उत्पन्न करने वाली शक्ति से अनुगत होने के कारण (वह) सब का बीज कहलाता है। विज्ञान का अभिप्राय (यहाँ) आलयविज्ञान से है। जो सबका बीज न हो, ऐसा भी विज्ञान होता है, अतः इसे 'सब का बीज' ऐसा विशेषण दिया गया है। विज्ञान से भिन्न प्रधान आदि को 'सबका बीज' कुछ लोग मानते हैं, अतः-'वह विज्ञान ही है'—ऐसा कहा गया है। अथवा एक पद के अर्थ का व्यभिचार होने पर भी विशेषण विशेषत्व देखा जाता है। इसलिये यह दोष नहीं है।

परिणामस्तथा तथा यात्यन्योन्यवशादिति। पूर्वावस्थातोऽन्यथाभावः परिणामः। तथा तथेति तस्य तस्य विकल्पस्यानन्तरोत्पादनसमर्थावस्थां प्राप्नोतीत्यर्थः। अन्योन्यवशादिति, तथा हि चक्षुरादिविज्ञानं स्वशक्तिपरिपोषे वर्तमाने शक्तिविशिष्टस्यालयविज्ञानपरिणामस्य

१. C. च.।

निमित्तं, सोऽपि आलयविज्ञानपरिणामः चक्षुरादिविज्ञानस्य निमित्तं भवति। एवमन्योन्यवशाद् यस्मादुभयं प्रवर्तते। तस्मादालयविज्ञानाद् अन्येनानधिष्ठिताद् अनेकप्रकारो विकल्पः स स जायते। तत्र च वर्तमाने जन्मनि यथालयविज्ञानात् प्रवृत्तिविज्ञानस्योत्पत्तिर्भवति तथाख्यातम्।

इस प्रकार अन्योन्य वश से अर्थात् एक दूसरे के प्रभाव से उस प्रकार के परिणाम उत्पन्न होते हैं। पूर्व अवस्था से अन्य अवस्था की प्राप्ति परिणाम है। 'तथा तथेति' का अर्थ है, उस उस विकल्प के अनन्तर उत्पादन समर्थ अवस्था को प्राप्त करता है। 'अन्योन्यवशात्' का अर्थ है चक्षुविज्ञान आदि अपनी शक्ति की परिपुष्टि में विद्यमान होकर शक्तिविशिष्ट आलयविज्ञान के परिणाम का निमित्त बनते हैं तथा वह आलयविज्ञान का परिणाम भी चक्षुविज्ञानादि का निमित्त होता है। इस प्रकार एक दूसरे के सहयोग से दोनों की प्रवृत्ति होती है। इस क्रम से अधिष्ठानरहित आलयविज्ञान से अनेक प्रकार के विकल्प उत्पन्न होते हैं। (अतः) इस जन्म में आलयविज्ञान से प्रवृत्तिविज्ञान की उत्पत्ति जिस प्रकार होती है, वह कह दिया गया।

( १६ )

इदानीं विज्ञप्तिमात्रे अनागतं जन्म वर्तमानजन्मनिरोधे सति यथा प्रतिसंधीयते तत् प्रदर्शयन्नाह—

**कर्मणो वासना ग्राहद्वयवासनया सह।**
**क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तत्॥ १९॥**

( १९ )

अब विज्ञप्तिमात्र के अन्तर्गत वर्तमान जन्म के निरुद्ध होने पर अनागत जन्म का प्रतिसन्धान कैसे होता है, इसको दर्शाते हुए कहा गया है :—

'ग्राहद्वयवासना अर्थात् ग्राह्यग्राहकवासना के साथ कर्मवासना पूर्व आलयविज्ञान के नष्ट होने पर अन्य आलयविज्ञान को उत्पन्न करती है॥ १९॥

इति। पुण्यापुण्यानेञ्ज्यचेतना कर्म। तेन कर्मणा यदानागतात्मभावाभिनिर्वृत्तये आलयविज्ञाने सामर्थ्यमाहितं सा कर्मवासना। ग्राहद्वयम्—ग्राह्यग्राहो ग्राहकग्राहश्च। तत्र विज्ञानात् पृथगेव स्वसंतानाध्यासितं ग्राह्यमस्तीत्यध्यवसायो ग्राह्यग्राहः। तच्च विज्ञानेन प्रतीयते



विज्ञायते गृह्यत इति योऽयं निश्चयः स ग्राहकग्राहः। पूर्वोत्पन्नग्राह्यग्राहकग्राहाक्षिप्तमनागततज्जातीयग्राह्यग्राहकग्राहोत्पत्तिबीजं ग्राहद्वयवासना।

कुशल, अकुशल तथा आनेञ्जचेतना को कर्म कहते हैं। भविष्य में आत्मभाव से अभिनिर्वृत्ति के लिए आलयविज्ञान में उस कर्म के द्वारा जो सामर्थ्य उत्पन्न होता है, उसे कर्मवासना कहते हैं। ग्राहद्वय का अर्थ है—ग्राह्यग्राह तथा ग्राहकग्राह। (उनमें) विज्ञान से पृथक् स्वसन्तान में अर्थात् अपने विज्ञानप्रवाह में आरोपितग्राह्य पदार्थ है, ऐसा अध्यवसाय ग्राह्यग्राह है। वह ग्राह्य विज्ञान के द्वारा जाना जाता है, ऐसा निश्चय ग्राहकग्राह है। पूर्व उत्पन्न ग्राह्य एवं ग्राहक ग्राहों द्वारा आक्षिप्त भविष्यत् के तत्समान ग्राह्य-ग्राहक-ग्राहों की उत्पत्ति के बीज को ग्राहद्वय वासना कहते हैं।

तत्र कर्मवासनाभेदाद् गतिभेदेनात्मभावभेदः बीजभेदादङ्कुरभेदवत्। ग्राहद्वयवासना तु[1] सर्वकर्मवासनानां यथास्वम् आक्षिप्तात्मभावोत्पादने प्रवृत्तानां सहकारित्वं प्रतिपद्यते। तद्यथा अबादयोऽङ्कुरस्योत्पत्ताविति। एवं च न केवलाः कर्मवासना ग्राहद्वयवासनाननुगृहीता विपाकं जनयन्तीत्युक्तं भवति। अत एवाह—ग्राहद्वयवासनया सहेति।

पुनः बीजभेद से अंकुरभेद के समान कर्मवासनाभेद से तथा गतिभेद से आत्मभाव अर्थात् जन्मग्रहण में भेद होता है। ग्राहद्वयवासना यथा योग्य भिन्न भिन्न योनियों को उत्पन्न करने में प्रवृत्त सभी कर्मवासनाओं का सहकारी कारण बनती है। जैसे-जल आदि अंकुर को उत्पत्ति में सहायक होते हैं। इस प्रकार यह फलित हुआ कि ग्राहद्वयवासना के सहकारिता के बिना केवल कर्म वासनायें विपाक को नहीं उत्पन्न कर सकती हैं। इसलिए कहा गया है कि-'दोनों ग्राहों की वासना के साथ ही'।

क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तदिति, पूर्वजन्मोपचितेन कर्मणा य इह विपाकोऽभिनिर्वृत्तस्तस्मिन् क्षीणे इति। आक्षेपकालेपर्यन्तावस्थिते यथाबलं कर्मवासना ग्राहद्वयवासनासहिता उपभुक्ताद्विपाकाद् अन्यद्विपाकं तदेवालयविज्ञानं जनयन्ति। आलयविज्ञानव्यतिरेकेणान्यस्य विपाकस्याभावात्। क्षीणे पूर्वविपाक इत्यनेन शाश्वतान्तं परिहरति। अन्यद्विपाकं जनयन्तीत्युच्छेदान्तम्।

'पूर्व विपाक के क्षीण होने पर अन्य विपाक को वे (कर्मवासनायें) उत्पन्न करती हैं', इसका यह अर्थ है कि पूर्व जन्म में उपचित कर्म से यहाँ जो विपाक

---

१. A. ग्राहद्वयवासनायास्तु (?)

को अभिनिर्वृत्तिहोती है, उसके क्षीण होने पर। आक्षेप काल की पर्यन्तावस्था में कर्मवासनायें यथाशक्ति ग्राहद्वयवासना के सहित उपयुक्त विपाक से अन्यविपाक अर्थात् आलयविज्ञान को उत्पन्न करती हैं। आलयविज्ञान के अतिरिक्त अन्य विपाक का अभाव है ( अर्थात् आलयविज्ञान के अतिरिक्त अन्य विपाक नहीं होता है)। 'पूर्व विपाक के क्षीण होने से' शाश्वतवाद के सिद्धान्त का परिहार किया गया है। 'अन्य विपाक उत्पन्न करती हैं'—इस पद से उच्छेदवाद के सिद्धान्त का ( निराकरण होता है )।

चक्षुरादिविज्ञानव्यतिरिक्तमालयविज्ञानमस्ति। तदेव च सर्वबीजकं न चक्षुरादिविज्ञानमिति। कुत एतत्? आगमाद् युक्तितश्च। उक्तं हि भगवताभिधर्मसूत्रे—

अनादिकालिको धातुः सर्वधर्मसमाश्रयः।
तस्मिन् सति गतिः सर्वा निर्वाणाधिगमोऽपि वा॥

चक्षुविज्ञान आदि के व्यतिरिक्त आलयविज्ञान है। वही ही सर्व बीजक है, न कि चक्षुविज्ञानादि। यह कैसे? आगम तथा युक्ति से। भगवान द्वारा अभिधर्म सूत्र में कहा गया है :—

'( यह आलयविज्ञान ) सभी धर्मों का आश्रय अनादिकालिक धातु है। उसी के होने पर संसार की गति या निर्वाण की प्राप्ति होती है।

न चालयविज्ञानमन्तरेण संसारप्रवृत्तिर्निवृत्तिर्वा युज्यते। तत्र संसारप्रवृत्तिर् निकायसभागान्तरेषु प्रतिसंधिबन्धः। निवृत्तिः सोपधिशेषो निरुपधिशेषश्च निर्वाणधातुः। तत्रालयविज्ञानाद् अन्यत् संस्कारप्रत्ययं विज्ञानं न युज्यते। संस्कारप्रत्ययविज्ञानाभावे प्रवृत्तेरप्यभावः संसारस्य। आलयविज्ञानानभ्युपगमे प्रतिसंधिविज्ञानं वा संस्कारप्रत्ययं परिकल्प्येत संस्कारभाविता[1] वा षड्विज्ञानकायाः।

आलयविज्ञान के बिना संसार की प्रवृत्ति या निवृत्ति संभव नहीं है। संसार की प्रवृत्ति का अर्थ है अन्य जन्मान्तरीय शरीरों में प्रतिसन्धि का होना। निवृत्ति का अर्थ है—सोपधिशेष, निरुपधिशेष निर्वाणधातु। आलयविज्ञान के अतिरिक्त संस्कार से होने वाला अन्य विज्ञान संभव नहीं। संस्कार से होने वाले विज्ञान के अभाव में संसार की प्रवृत्ति का भी अभाव है। आलयविज्ञान को न स्वीकार करने से प्रतिसन्धि विज्ञान को संस्कार प्रत्यय मानना होगा या संस्कार भावित छ विज्ञान कायों को मानना होगा।

१. C. परिभाविता।



तत्र ये[1] संस्काराः प्रातिसंधिकविज्ञानप्रत्ययत्वेनेष्यन्ते, तेषां चिरनिरुद्धत्वात्, निरुद्धस्य चासत्त्वात्, असतश्च प्रत्ययत्वाभावात् न संस्कारप्रत्ययं प्रतिसंधिविज्ञानं युज्यते।

उनमें जिन संस्कारों को प्रातिसन्धिकविज्ञान का कारण माना जाता है, उनके तो बहुत पहले ही निरुद्ध हो जाने से, जो निरुद्ध हैं, उसके नहीं रहने से, जो नहीं हैं, उसका कारण न होने से, संस्कार के प्रत्यय से प्रतिसन्धि-विज्ञान का होना युक्त नहीं है।

प्रतिसंधौ च नामरूपमप्यस्ति न केवलं विज्ञानम्। तत्र विज्ञानमेव संस्कारप्रत्ययं न नामरूपमिति, का तत्र युक्तिः। तस्मात् संस्कारप्रत्ययं नामरूपमिति वक्तव्यं न तु विज्ञानमिति।

प्रतिसन्धि में नामरूप भी होता है, केवल विज्ञान नहीं। तो पुनः विज्ञान को ही संस्कार के प्रत्यय से उत्पन्न क्यों माना जाय, नामरूप को क्यों नहीं, इसमें क्या युक्ति है? अतः संस्कार के प्रत्यय से नामरूप को ही उत्पन्न समझना चाहिए, विज्ञान को नहीं।

कतमदन्यद्[2] विज्ञानप्रत्ययं नामरूपम्? यदुत्तरकालमिति चेत् तस्य प्रातिसंधिकनामरूपात् क आत्मातिशयः यतस्तदेव विज्ञानप्रत्ययं न पूर्वं पूर्वं च संस्कारप्रत्ययं नोत्तरमिति? अतश्च संस्कारप्रत्ययं नामरूपमेवास्तु किं प्रातिसंधिविज्ञानेनाङ्गान्तरेण परिकल्पितेन। तस्मान्न प्रतिसंधिविज्ञानं संस्कारप्रत्ययं युज्यते। संस्कारपरिभाविता वा षड्विज्ञानकाया अपि न संस्कारप्रत्ययं विज्ञानं युज्यते।

पुनः वह कौन सा नामरूप है जो विज्ञान से उत्पन्न होता है। यदि यह कहा जाय कि जो उत्तर काल में उत्पन्न नामरूप है, वह विज्ञान से ( उत्पन्न ) होता है, तो उस नामरूप में प्रातिसन्धिक नामरूप से क्या विशेषता है, जिससे कि वही विज्ञान प्रत्यय है, पहलेवाला नहीं। तथा ( इसमें भी क्या युक्ति है कि ) पूर्वकालिक नामरूप का कारण संस्कार है, उत्तरकालिक नामरूप का नहीं? अतः जब संस्कार के कारण नामरूप की उत्पत्ति मान ली जाय तो एक अन्य अंग प्रतिसन्धिविज्ञान की कल्पना की क्या आवश्यकता है? एतदर्थ प्रतिसन्धिविज्ञान को संस्कार प्रत्यय से उत्पन्न मानना युक्त नहीं है। संस्कार परिभावित ( उत्पन्न ) छ विज्ञानकायों को भी संस्कार प्रत्यय से उत्पन्न मानना युक्त नहीं है।

१. C. ये मे।  २. A. कतमदन्य···(?)

किं कारणम् ? न हि विज्ञानं विपाकवासनां निष्यन्दवासनां वा स्वात्मन्याधातुं समर्थं, स्वात्मनि कारित्रविरोधात्, नाप्यनागते तस्य तदानुत्पन्नत्वात्। अनुत्पन्नस्य चासत्त्वात्। नाप्युत्पन्ने, पूर्वस्य तदा निरुद्धत्वात्। अचित्तिकासु च निरोधसमापत्त्याद्यवस्थासु पुनः संस्कार-परिभावितचित्तोत्पत्त्यसंभवात्। विज्ञानप्रत्ययं नामरूपं न स्यात्, षडायतनं न स्यात्[1]। एवं यावज्जातिप्रत्ययं जरामरणं न स्यात्। ततश्च संसारप्रवृत्तिरेव न स्यात्। तस्मादविद्याप्रत्ययाः संस्काराः तदधिवासितालयविज्ञानं संस्कारप्रत्ययं विज्ञानम्। तत्प्रत्ययं प्रतिसंधौ नामरूप-मित्येषैव नीतिरनवद्या।

इसका क्या कारण है? विज्ञान विपाकवासना तथा निष्यन्दवासना को अपने में धारण करने में समर्थ नहीं है, क्योंकि अपने आप में क्रिया का विरोध है, तथा अनागत विज्ञान में भी (विपाकवासना तथा निष्यन्दवासना नहीं रह सकती हैं) क्योंकि वह उस समय तक उत्पन्न ही नहीं रहता है। जो उत्पन्न ही नहीं है, वह अविद्यमान है। जो पूर्व में उत्पन्न है, उसमें भी (इनका) धारण नहीं किया जा सकता है, क्योंकि वह तो उस समय निरुद्ध रहता है। अचित्तकनिरोधसमापत्ति आदि अवस्थाओं में संस्कार-परिभावित चित्त की उत्पत्ति असंभव है। जब विज्ञान प्रत्यय नामरूप न हों, षडायतन न हों, तो इस प्रकार जाति प्रत्यय जरामरण तक न हो। तब संसार की प्रवृत्ति न हो। अतः अविद्या के प्रत्यय से संस्कार होते हैं और उनसे अधिवासित आलयविज्ञान ही संस्कार से होने वाला विज्ञान है। उसके प्रत्यय से प्रतिसन्धि के समय नाम रूप उत्पन्न होते हैं, यह जो नीति है वह अनवद्य अर्थात् निर्दोष है।

संसारनिवृत्तिरपि आलयविज्ञाने असति न युज्यते। संसारस्य हि कर्म क्लेशाश्च कारणम्। तयोश्च क्लेशाः प्रधानम्। तथा हि क्लेशाधि-पत्यात् कर्म पुनर्भवाक्षेपसमर्थं भवति नान्यथा। तथा आक्षिप्तपुनर्भ-वोपि कर्म[2] क्लेशाधिपत्यादेव पुनर्भवो भवति नान्यथा। एवं च क्लेशा एव संसारप्रवृत्तेः प्रधानत्वान् मूलम्। अतस्तेषु प्रहीणेषु संसारो विनि-वर्तते, नान्यथा।

आलयविज्ञान के न रहने से संसार की निवृत्ति भी युक्त नहीं है। संसार के कारण कर्म और क्लेश हैं। उनमें क्लेश प्रधान हैं। क्लेश के आधिपत्य से कर्म पुनर्भव में ले जाने में समर्थ होता है अन्यथा नहीं। पुनर्जन्म को लाने में कर्म को समर्थ होने पर भी क्लेश के आधिपत्य से ही पुनर्जन्म होता है,

१. C. तदभावात् षडायतनं न स्यात्।

२. —पुनर्भवेपि कर्मणि ?



अन्यथा नहीं। अतः क्लेश ही संसार की प्रवृत्ति में प्रधान होने के कारण मूल हैं। अतः उनके प्रहीण होने से संसार की निवृत्ति होती है, अन्यथा नहीं।

न चालयविज्ञानमन्तरेण तत्प्रहाणं युज्यते। कथं पुनर्न युज्यते ? संमुखीभूतो वा क्लेशः प्रहीयते, बीजावस्थो वा। तत्र संमुखीभूतः प्रही-यत इति अनिष्टिरेवेयम्। तत्र[1] प्रहाणमार्गस्थायिनां वा बीजावस्थोऽपि नैव प्रहीयते। न हि प्रतिपक्षात् तदानीं किंचिदन्यदभ्युपगम्यते। यत्र क्लेशबीजं व्यवस्थितं तत्प्रतिपक्षेण प्रहीयेत। अथ प्रतिपक्षचित्तम् एव क्लेशबीजानुषक्तम् इष्यते, न हि तत् क्लेशबीजानुषक्तमेव तत्प्रतिपक्षो भवितुमर्हति। न चाप्रहीणक्लेशबीजानां संसारनिवृत्तिः संभवति। तस्मादवश्यम् आलयविज्ञानं तदन्यविज्ञानसहभूमि क्लेशोपक्लेशैर्भा-व्यते स्वबीजपुष्ट्यादानत इत्यभ्युपेयम्।

आलयविज्ञान के विना उनका (क्लेशों का) प्रहाण भी युक्त नहीं है। वह कैसे युक्त नहीं है ? (दो प्रकार के क्लेश हो सकते हैं—संमुखीभूत या बीजावस्थ) तो जो क्लेश संमुख विद्यमान हैं, उनका प्रहाण माना जाय या जो बीजरूप से स्थित हैं उनका ? इनमें यदि यह मान्य हो कि संमुखीभूत क्लेश नष्ट होते हैं, तो यह युक्त नहीं। तथा जो प्रहाणमार्ग में स्थित हैं, उनके बीजावस्थ भी क्लेश नष्ट नहीं होते हैं। प्रतिपक्ष के अतिरिक्त अन्य किसी पदार्थ की सत्ता को (आलयविज्ञान न मानने वाले) नहीं मानते हैं। जहां क्लेशबीज स्थित हैं, तो उसके प्रतिपक्ष से नष्ट होते हैं। जब प्रतिपक्ष चित्त को ही क्लेशबीजों से अनुषक्त (युक्त) माना जाय, तो क्लेशबीजों से युक्त होता हुआ उसका प्रतिपक्षी नहीं हो सकता है। क्लेशबीजों के नाश हुए विना संसार से निवृत्ति नहीं हो सकती है। अतः अवश्य ही आलयविज्ञान उससे भिन्न विज्ञानों के साथ होने वाले क्लेश तथा उपक्लेशों के द्वारा अपने बीज की पुष्टि के आदान से भावित होता है (अर्थात् नया नया रूप धारण करते रहता है), ऐसा समझना चाहिए।

ये पुनश्चित्तत एव संततिपरिणामविशेषाद् यथाबलं वासनावृत्ति-लाभे सति क्लेशोपक्लेशाः प्रवर्तन्ते, तेषां चालयविज्ञानव्यवस्थितं बीजं तत्सहभुवा क्लेशप्रतिपक्षमार्गेणापनीयते। तस्मिंश्चापनीते न पुनस्तेनाश्रयेण क्लेशानामुत्पत्तिरिति, सोपधिशेषो निर्वाणधातुः प्राप्यते। पूर्वकर्माक्षिप्तजन्मनिरोधे च ततोऽन्यजन्माप्रतिसंधानान् निरुपधिशेषो निर्वाणधातुः। न हि कर्म विद्यमानमपि क्लेशेषु प्रहीणेषु सहकारिकारणा-

१. C. तस्य।  २. C. स्थितत्त्वात्।

भावात् पुनर्भवमभिनिर्वर्तयितुं समर्थम्। एवम् आलयविज्ञाने सति संसारप्रवृत्तिनिवृत्तिश्च, नान्यथेत्यवश्यं चक्षुरादिविज्ञानव्यतिरिक्तम् आलयविज्ञानम्। तदेव च सर्वकर्मबीजानुगतं, न चक्षुरादिविज्ञानमित्यभ्युपगन्तव्यम्। विस्तरविचारस्तु पञ्चस्कन्धकोपनिबन्धाद् वेदितव्यः।

जो क्लेशोपक्लेश चित्त ही के परिणामविशेष से यथाशक्ति वासनावृत्ति का लाभ होने पर प्रवृत्त होते हैं, उनके आलयविज्ञान में स्थित बीज, उनके साथ होने वाले क्लेशप्रतिपक्ष मार्ग से नष्ट होते हैं। बीज के नष्ट होने पर पुनः उस आश्रय से क्लेशों की उत्पत्ति नहीं होती है, अतः सोपधिशेषनिर्वाण की प्राप्ति होती है। पूर्व कर्मों द्वारा आक्षिप्त जन्म के नष्ट हो जाने से, तथा उसके उपरान्त अन्य जन्म का प्रतिसन्धान न होने से निरुपधिशेषनिर्वाण की प्राप्ति होती है। कर्म के विद्यमान रहने पर भी सहकारी कारणों के अभाव हो जाने से वह (आलयविज्ञान) पुनर्जन्म देने में समर्थ नहीं होता है। इस प्रकार आलयविज्ञान के रहने से ही संसार की प्रवृत्ति तथा निवृत्ति संभव है, अन्यथा नहीं। अतः चक्षुविज्ञानादि से व्यतिरिक्त आलयविज्ञान को अवश्य मानना चाहिए। वही ही सभी कर्म बीजों से अनुगत है, चक्षुविज्ञानादि नहीं, ऐसा समझना चाहिए। विस्तारपूर्वक विचार के लिए इसे पञ्चस्कन्धोपनिबन्ध नामक ग्रन्थ के अनुसार जानना चाहिए।

( २० )

यदि विज्ञप्तिमात्रमेवेदं कथं न सूत्रविरोधः? सूत्रेषु हि त्रयः स्वभावा उक्ताः परिकल्पितः परतन्त्रः परिनिष्पन्नश्च। नास्ति विरोधः। विज्ञप्तिमात्र एव सति स्वभावत्रयव्यवस्थानात्। कथमित्यत आह—

**येन येन विकल्पेन यद्यद् वस्तु विकल्प्यते।**
**परिकल्पित एवासौ स्वभावो न स विद्यते ॥ २० ॥**

( २० )

यदि सब कुछ विज्ञप्तिमात्र ही है तो सूत्र का विरोध क्यों नहीं होता है? सूत्रों में तो (वस्तुओं) का तीन प्रकार का स्वभाव कहा गया है—परिकल्पित परतन्त्र, और परिनिष्पन्न। सूत्र का विरोध (इससे) नहीं होता है। विज्ञप्तिमात्र होने पर भी तीन प्रकार के स्वभावों की व्यवस्था हो जाती है। वह कैसे होती है, इस पर कहा गया है:—

जिस जिस विकल्प से जिस वस्तु का विकल्प होता है, वह परिकल्पित स्वभाव है। वह वास्तविक नहीं है ॥ २० ॥



आध्यात्मिकबाह्यविकल्प्यवस्तुभेदेन विकल्प्यानामानन्त्यं प्रदर्शयन्नाह। येन येन विकल्पेनेति, यद् यद् वस्तु प्रकल्प्यते, आध्यात्मिकं बाह्यं वान्तशो यावद् बुद्धधर्मा अपि, परिकल्पित एवासौ स्वभाव इति। अत्र कारणमाह, 'न स विद्यत इति'। यद् वस्तु विकल्पविषयस्तद् यस्मात् सत्ताऽभावान्न विद्यते। तस्मात् तद्वस्तु परिकल्पितस्वभावमेव। न हेतुप्रत्ययप्रतिपद्यस्वभावम्। तथा ह्येकस्मिन् वस्तुनि तदभावे च परस्परविरुद्धानेकविकल्पप्रवृत्तिर्दृष्टा। न च तदेकं वस्तु तदभावो वा परस्परविरुद्धानेकस्वभावो युज्यते। तस्मात् सर्वमिदं विकल्पमात्रमेव तदर्थस्य परिकल्पितरूपत्वात्। उक्तं च सूत्रे। न खलु पुनः सुभूते, धर्मास्तथा विद्यन्ते यथा बालपृथग्जना अभिनिविष्टा इति।

आध्यात्मिक बाह्य विकल्प्य वस्तु के भेद से विकल्पों की अनन्तता दिखलाते हुए कहा गया है:—जिस जिस विकल्प से जिस जिस वस्तु का विकल्प किया जाता है, आध्यात्मिक हो या बाह्य, यहां तक कि बुद्धधर्म भी, वह सब परिकल्पित स्वभाव है। इसका कारण बतलाया गया है कि—"वह विद्यमान नहीं है"। जो वस्तु विकल्प का विषय है, उसमें सत्ता का अभाव होने के कारण अविद्यमान है। अतः वह वस्तु परिकल्पित स्वभाव वाला है। हेतुप्रत्यय से प्राप्त स्वभाव वाला नहीं है। तथा एक ही वस्तु में और उसके अभाव में परस्पर विरुद्ध अनेक विकल्पों की प्रवृत्ति देखी जाती है। एक ही वस्तु अथवा उसके अभाव में परस्पर विरुद्ध अनेक स्वभाव युक्त नहीं है। अतः उनके विकल्पों के विषयभूत वस्तुओं के परिकल्पित होने के कारण सब कुछ विकल्प मात्र है। सूत्र में कहा गया है:—हे सुभूति-धर्म उस प्रकार के नहीं हैं, यथा मूढ पृथक् जन मानते हैं।

( २१ )

परिकल्पितानन्तरं परतन्त्रस्वभावो वक्तव्य इति। अत आह—

**'परतन्त्रस्वभावस्तु विकल्पः प्रत्ययोद्भवः'।**

( २१ )

परिकल्पित (वस्तु) के अनन्तर परतन्त्र स्वभाव को कहना चाहिए, अतः कहा गया है—

'परतन्त्रस्वभाववालाविकल्प प्रत्यय से उत्पन्न है'।

अत्र विकल्प इति परतन्त्रस्वरूपमाह। प्रत्ययोद्भव इत्यनेनापि परतन्त्राभिधानप्रवृत्तिनिमित्तमाह। तत्र परिकल्पः कुशलाकुशलाव्याकृतभेदभिन्नास् त्रैधातुकाश्चित्तचैत्ताः। यथोक्तम्। 'अभूतपरिकल्पस्तु

चित्तचैत्तास्त्रिधातुकाः' इति। परैर्हेतुप्रत्ययैस्तन्त्र्यत इति परतन्त्र उत्पाद्यत इत्यर्थः। स्वतोऽन्यहेतुप्रत्ययप्रतिबद्धात्मलाभ इति यावदुक्तं भवति। उक्तः परतन्त्रः।

यहां विकल्प शब्द से परतन्त्र स्वरूप अभिप्रेत है। प्रत्ययोद्भव शब्द से परतन्त्र नामक शब्द की प्रवृत्ति का निमित्त बतलाया गया है। कुशल, अकुशल और अव्याकृत भेद से भिन्न त्रैधातुक चित्त चैतसिक परिकल्पित हैं। यथा कहा गया है—'त्रैधातुक चित्त चैतसिक अभूतपरिकल्प हैं'। स्वभिन्न हेतुप्रत्यय से उत्पन्न होते हैं, अतः परतन्त्र कहलाते हैं। (परतंत्र क्यों है?) क्योंकि अपने से भिन्न हेतु प्रत्ययों पर उनका होना निर्भर है। इस प्रकार परतन्त्र को कह दिया गया।

परिनिष्पन्नः कथमित्यत आह :—

## निष्पन्नस्तस्य पूर्वेण सदा रहितता तु या॥ २१॥

परिनिष्पन्न कैसा होता है, इसको बतलाया गया है—

'निष्पन्न वह इसलिए है कि वह पूर्व अर्थात् परिकल्पित ग्राहकग्राह्यभाव से सर्वदा रहित है॥ २१॥

अविकारपरिनिष्पत्त्या स परिनिष्पन्नः। तस्येति परतन्त्रस्य पूर्वेणेति परिकल्पितेन तस्मिन् विकल्पे ग्राह्य ग्राहकभावः परिकल्पितः। तथा हि तस्मिन् विकल्पे ग्राह्यग्राहकत्वम् अविद्यमानमेव परिकल्प्यत इति परिकल्पितमुच्यते। तेन ग्राह्यग्राहकेण परतन्त्रस्य सदा सर्वकालम् अत्यन्तरहितता या स परिनिष्पन्नस्वभावः।

निर्विकार सिद्ध होने के कारण वह परिनिष्पन्न कहलाता है। 'उसका' अर्थात् परतन्त्र का, 'पूर्व से' अर्थात् परिकल्पित से। उस विकल्प में ग्राह्यग्राहक-भाव परिकल्पित है क्योंकि उस विकल्प में अविद्यमान ही ग्राह्यग्राहकत्व की कल्पना की जाती है। इसलिए उसे परिकल्पित कहते हैं। इस प्रकार उस ग्राह्यग्राहक से परतन्त्र की जो सार्वकालिक अत्यन्तरहितता है, वही परिनिष्पन्न स्वभाव है।

( २२ )

## अत एव स नैवान्यो नानन्यः परतन्त्रतः।

अत एव स नैवेति परिकल्पितेन स्वभावेन परतन्त्रस्य सदा रहितता परिनिष्पन्नः। रहितता च धर्मता[1] धर्मान्नान्या नानन्या

१. C. धर्मता धर्मता धर्मान्।



युज्यते। परिनिष्पन्नश्च परतन्त्रधर्मतेत्यतः परतन्त्रात् परिनिष्पन्नो नान्यो नानन्य इति बोद्धव्यः। यदि हि परिनिष्पन्नः परतन्त्रादन्यः स्याद्, एवं न परिकल्पितेन परतन्त्रः शून्यः स्यात्। अथानन्य, एवमपि परिनिष्पन्नो न विशुद्धआलम्बनः स्यात्, परतन्त्रवत् संक्लेशात्मकत्वात्। एवं परतन्त्रश्च न क्लेशात्मकः स्यात्, परिनिष्पन्नाद् अनन्यत्वात् परिनिष्पन्नवत्।

( २२ )

'अतः वह ( परिनिष्पन्न ) परतन्त्र से न भिन्न ही है, न अभिन्न ही'।

परिकल्पित स्वभाव से परतन्त्र की सदा रहितता ही परिनिष्पन्न शब्द से अभिप्रेत है। जो रहितता है, वही धर्मता है, वह धर्म से न भिन्न ही है, न अभिन्न ही। परिनिष्पन्न परतन्त्र की धर्मता है, अतः परतन्त्र से परिनिष्पन्न न भिन्न ही है, न अभिन्न ही, ऐसा जानना चाहिए। यदि परिनिष्पन्न परतन्त्र से भिन्न हो, तो वह परिकल्पित से शून्य न हो। यदि वह अभिन्न हो, तो वह परतन्त्र के समान संक्लेशात्मक होने के कारण विशुद्ध आलम्बन वाला न हो। इसी प्रकार परतन्त्र भी परिनिष्पन्न से अभिन्न होने के कारण परिनिष्पन्न के समान क्लेशात्मक न हो।

## अनित्यतादिवद् वाच्यो—

नान्यो नानन्य इति वाक्यशेषः। यथा ह्यनित्यता दुःखतानात्मता च संस्कारादिभ्यो नान्या नानन्या। यदि संस्कारेभ्योऽनित्यता अन्या, एवं तर्हि संस्कारा नित्याः स्युः। अथानन्या एवमपि संस्काराः। प्रणष्ट-स्वभावरूपाः[1] स्युः अनित्यतावत्। एवं दुःखतादिष्वपि वाच्यम्।

"अनित्यादि के समान कहना चाहिए"।

न भिन्न है, न अभिन्न ही, यह वाक्यशेष है। जैसे अनित्यता, दुःखता एवं अनात्मता, संस्कारादि से न अन्य न अनन्य हैं। यदि संस्कारों से अनित्यता अन्य है, तो संस्कार भी नित्य हो जांय। यदि वह (संस्कारों से) अभिन्न है तो संस्कार भी अनित्यता के समान प्रध्वंसाभावरूप हो जांय। इसी प्रकार दुःखता आदि में भी कहना चाहिए।

यदि ग्राह्यग्राहकभावरहितः परतन्त्रः कथमसौ गृह्यते अगृह्यमाणो वा कथमस्तीति विज्ञायते। अत आह।'—

## —नादृष्टेऽस्मिन् स दृश्यते॥ २२॥

१. C. प्रध्वंसाभावरूपाः।

यदि परतन्त्र ग्राह्यग्राहक भाव से रहित है तो उसका ग्रहण कैसे होता है तथा बिना ग्रहण हुए उसके अस्तित्व का ज्ञान कैसे होता है ? अतः कहा गया है—

इसको बिना देखे उसका दर्शन नहीं होता है ॥ २२ ॥

नादृष्टेऽस्मिन्निति परिनिष्पन्नस्वभावे स दृश्यत इति परतन्त्रः स्वभावः। निर्विकल्पलोकोत्तरज्ञानदृश्ये परिनिष्पन्ने स्वभावे अदृष्टे अप्रतिविद्धे असाक्षात्कृते तत्पृष्ठलब्धशुद्धलौकिकज्ञानगम्यत्वात्, परतन्त्रोऽन्येन ज्ञानेन न गृह्यते। अतः परिनिष्पन्ने अदृष्टे परतन्त्रो न दृश्यते।

न पुनर् लोकोत्तरज्ञानपृष्ठलब्धेनापि ज्ञानेन न दृश्यते। यथा निर्विकल्पप्रवेशायां धारण्यामुक्तम्। तत्पृष्ठलब्धेन ज्ञानेन मायामरीचि-स्वप्नप्रतिश्रुत्कोदकचन्द्रनिर्मितसमान् सर्वधर्मान् प्रत्येतीति।

अत्र च धर्माः परतन्त्रसंगृहीता अभिप्रेताः। परिनिष्पन्नश्चाकाशवद् एकरसः। ज्ञानं च यथोक्तं निर्विकल्पेन ज्ञानेनाकाशसमतायां सर्वधर्मान् पश्यतीति परतन्त्रधर्माणां तथतामात्रदर्शनात्।

बिना परिनिष्पन्न स्वभाव का दर्शन प्राप्त किये परतन्त्र स्वभाव का दर्शन नहीं होता। निर्विकल्पक लोकोत्तरज्ञान से देखने योग्य परिनिष्पन्न स्वभाव का बिना दर्शन, प्रतिवेध या साक्षात्कार किये उस परतन्त्र का ज्ञान नहीं होता है। क्योंकि उस लोकोत्तरज्ञान के अनन्तर प्राप्त होने वाले शुद्ध लौकिक ज्ञान से वह गम्य है। अतः परिनिष्पन्न को बिना देखे हुए परतन्त्र का दर्शन नहीं होता है।

यह बात नहीं कि लोकोत्तरज्ञान के बाद प्राप्त होने वाले ज्ञान से भी उसका दर्शन नहीं होता। जैसा कि निर्विकल्पप्रवेशधारणी में कहा गया है। 'उसके अनन्तर लब्ध ज्ञान से सभी धर्मों को माया मरीचि, स्वप्न प्रतिध्वनि जल में प्रतिबिम्बित चन्द्रमा के समान ( असार ) समझता है'।

यहां धारणी में 'धर्म' परतन्त्र से संगृहीत लिए गये हैं। परिनिष्पन्न आकाश के समान एक रस है। ज्ञान शब्द का अर्थ लोकोत्तरज्ञान पृष्ठलब्ध लौकिक-ज्ञान है, जो पहले कहा जा चुका है। 'निर्विकल्प ज्ञान से सभी धर्मों को आकाश के समान देखता है क्योंकि उसमें परतन्त्र धर्मों की वास्तविकता का दर्शन होता है।

( २३ )

यदि द्रव्यमेव परतन्त्रः कथं सूत्रे सर्वधर्मा निःस्वभावा अनुत्पन्ना अनिरुद्धा इति निर्दिश्यन्ते। नास्ति विरोधः यस्मात्—

**त्रिविधस्य स्वभावस्य त्रिविधां निःस्वभावताम्।**
**संधाय सर्वधर्माणां देशिता निःस्वभावता ॥ २३ ॥**



( २३ )

यदि परतन्त्र धर्म वास्तविक होते, तो सूत्र में सभी धर्म निःस्वभाव, अनुत्पन्न तथा अनिरुद्ध क्यों कहे जाते। ( सूत्र का ) विरोध नहीं है क्योंकि—

'तीन प्रकार के स्वभाव की तीन प्रकार की निःस्वभावता को देखकर सभी प्रकार के धर्मों की निःस्वभावता का उपदेश दिया गया है ॥ २३ ॥

त्रय एव स्वभावा न चतुर्थोऽस्तीति ज्ञापनार्थं संख्यानिर्देशः। स्वेन स्वेन लक्षणेन विद्यमानवद् भवतीति[1]। त्रिविधा निःस्वभावता लक्षण-निःस्वभावता उत्पत्तिनिःस्वभावता परमार्थनिःस्वभावता च। सर्वधर्माः परिकल्पितपरतन्त्रपरिनिष्पन्नात्मकाः।

तीन प्रकार के ही स्वभाव हैं चौथे प्रकार के नहीं, इस बात को बतलाने के लिए संख्या निर्देश है। अपने अपने लक्षण से ( सभी धर्म ) विद्यमान के समान हैं। निःस्वभावता तीन प्रकार की है—लक्षणनिःस्वभावता, उत्पत्ति-निःस्वभावता तथा परमार्थनिःस्वभावता। 'सभी धर्म' से परिकल्पित परतन्त्र तथा परिनिष्पन्नात्मक धर्म समझना चाहिए।

( २४ )

इदानीं त्रिविधस्य स्वभावस्य या यस्य निःस्वभावता तां तस्य प्रदर्शयन्नाह—

**प्रथमो लक्षणेनैव निःस्वभावोऽपरः पुनः।**
**न स्वयं भाव एतस्येत्यपरा निःस्वभावता ॥ २४ ॥**

( २४ )

अब तीन प्रकार के स्वभावों में जिसकी जो निःस्वभावता है, उसको दिखलाते हुए कहा गया है—

प्रथम तो लक्षण से निःस्वभाव है, दूसरे का स्वयं भाव नहीं होने के कारण उत्पत्ति निःस्वभाव है ॥ २४ ॥

( २५ )

**धर्माणां परमार्थश्च स यतस्तथतापि सः।**

( २५ )

'धर्मों का वही वास्तविक स्वरूप है इसलिए ( परिनिष्पन्न में ) परमार्थ-निःस्वभावता है। वही तथता है'।

---

1. C. भवतीति स्वभावः।

प्रथमः परिकल्पितः स्वभावः। अयं च लक्षणेनैव निःस्वभावः तल्लक्षणस्योत्प्रेक्षितत्वात्। रूपलक्षणं[1] रूपम् अनुभवलक्षणा वेदनेत्यादि। अतश्च स्वरूपाभावात् खपुष्पवत् स्वरूपेणैव निःस्वभावः। अपरः पुनरिति परतन्त्रस्वभावः। न स्वयंभाव एतस्य मायावत् परप्रत्ययेनोत्पत्तेः। अतश्च यथा प्रख्याति तथास्योत्पत्तिर्नास्तीति अतोऽस्य उत्पत्तिनिःस्वभावतेत्युच्यते।

पहला परिकल्पित स्वभाव है। यह लक्षण से उत्प्रेक्षित होने के कारण लक्षण से ही निःस्वभावता है। रूपलक्षणवाला रूप है, अनुभवलक्षणवाली वेदना है, आदि। अतः स्वरूप के नहीं होने से आकाशकुसुम के समान स्वरूप से ही निःस्वभाव है। दूसरा पुनः परतन्त्र स्वभाव है। इसकी अपनी सत्ता नहीं है, माया के समान दूसरे के कारण से इसकी उत्पत्ति होती है। जैसा यह ज्ञात होता है, वैसी उसकी उत्पत्ति नहीं है, अतः इसकी उत्पत्तिनिःस्वभावता कही जाती है।

धर्माणां परमार्थश्च स यतस्तथतापि स इति। परमं हि लोकोत्तरज्ञानं, निरुत्तरत्वात्तस्यार्थः परमार्थः। अथ वा आकाशवत् सर्वत्रैकरसार्थेन वैमल्याविकारार्थेन च परिनिष्पन्नः स्वभावः परमार्थ उच्यते। स यस्मात् परिनिष्पन्नः स्वभावः सर्वधर्माणां परतन्त्रात्मकानां परमार्थः तद्धर्मतेति कृत्वा तस्मात् परिनिष्पन्न एव स्वभावः परमार्थनिःस्वभावता परिनिष्पन्नस्याभावस्वभावत्वात्। किं पुनः परमार्थाभिधानेनैव परिनिष्पन्नोऽभिधातव्यः, नेत्याह। किं तर्हि? तथतापि सः। अपिशब्दान्न केवलं तथताशब्देनैवाभिधातव्यः। किं तर्हि? यावन्तो धर्मधातुपर्यायाः सर्वैस्तैरप्यभिधातव्य इति।

'धर्मों का जो परमार्थ रूप है, वही तथता है'। परम का अर्थ लोकोत्तरज्ञान है, उसके आगे कोई अन्य ज्ञान न होने के कारण उससे गम्य जो अर्थ है, वह परमार्थ कहलाता है। अथवा आकाश के समान सर्वत्र एक रस विमल तथा निर्विकार होने के कारण परिनिष्पन्न स्वभाव को परमार्थ कहते हैं। यस्मात् परिनिष्पन्न स्वभाव ही सभी परतन्त्रात्मक धर्मों का परमार्थ है, वही उनकी धर्मता है, अतः परिनिष्पन्न स्वभाव ही परमार्थनिःस्वभावता है क्योंकि परिनिष्पन्न वस्तुतः अभाव स्वभाव वाला है। क्या परिनिष्पन्न को केवल परमार्थ शब्द से ही कहना चाहिए? (इसका उत्तर है) नहीं। तब किस शब्द से कहा जा सकता है? वह तथता भी है। 'अपि' शब्द से (यह अभिप्राय द्योतित होता

१. C. रूपणलक्षणं।



है कि) केवल तथता शब्द से ही उसका कथन नहीं करना चाहिए। तब क्या? जितने भी धर्मधातु के पर्यायवाची शब्द हैं, वे सभी उसके लिए उपयुक्त हैं।

**सर्वकालं तथाभावात्—**

तथता। तथा हि पृथग्जनशैक्षाशैक्षावस्थासु सर्वकालं तथैव भवति, नान्यथेति तथतेत्युच्यते[1]।

'सभी काल में उसी रूप में बने रहने के कारण (वह तथता है)' है।

पृथग्जन, शैक्ष तथा अशैक्षों की अवस्थाओं में तथा सभी काल में वह वैसा ही रहता है, किसी अन्य रूप में नहीं, इसलिए (वह) तथता कहलाता है।

कि पुनस्तथता तत्परिनिष्पन्न एव विज्ञप्तिमात्रता, उतान्या विज्ञप्तिमात्रता? अत आह—

**—सैव विज्ञप्तिमात्रता ॥ २५ ॥**

जो वह तथता है, क्या वही परिनिष्पन्न विज्ञप्तिमात्रता है या विज्ञप्तिमात्रता अन्य है? इसको दर्शाते हुए कहा गया है—

'वही ही विज्ञप्तिमात्रता है' ॥ २५ ॥

अतिविशुद्धलक्षणावबोधाद्। यथोक्तम्—

नाम्नि तिष्ठति तच्चित्तं तदा तन्मात्रदर्शनात्।
नाम्नि स्थानाच्च विज्ञप्तावुपलम्भः प्रहीयते॥
नोपलम्भं तदा धातुं स्पृशते भावनान्वयात्।
सर्वावरणविमोक्षं विभुत्वं लभते तदा॥

इति। सैव विज्ञप्तिमात्रतेत्यनेन वचनेनाभिसमय उक्तः।

क्योंकि उसमें अति विशुद्ध लक्षण का ज्ञान होता है। जैसा कि कहा गया है कि उस समय केवल उतने ही मात्र का दर्शन होने से नाम में चित्त स्थित होता है। नाम में (चित्त के) स्थित होने से विज्ञप्ति की उपलब्धि नष्ट हो जाती है। भावना के कारण उस समय चित्त उपलम्भ धातु को स्पर्श नहीं करता। तब सभी आवरणों से मुक्त हो विभुत्व को प्राप्त करता है। 'वही ही विज्ञप्तिमात्रता है'—इस वचन से सिद्धान्त का यथार्थ कथन किया गया है।

(२६)

यदि विज्ञप्तिमात्रमेवेदं कस्माच् चक्षुःश्रोत्रघ्राणरसस्पर्शनैः[2] रूपशब्दगन्धरसस्पर्शान् गृह्णातीत्यत आह—

**यावद् विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठते।**
**ग्राहद्वयस्यानुशयस्तावन्न विनिवर्तते ॥ २६ ॥**

१. C. —तथतावत्। २. जिह्वाकायैः।

( २६ )

जब सब कुछ विज्ञप्तिमात्र ही है तो क्यों चक्षु, श्रोत्र, घ्राण, जिह्वा, काय द्वारा रूप, शब्द, गन्ध, रस तथा स्प्रष्टव्य का ग्रहण होता है? इस प्रश्न के समाधान में कहा गया है—

'जब तक विज्ञान विज्ञप्तिमात्रता में स्थित नहीं होता है, तब तक ग्राह्य और ग्राहक वासना नष्ट नहीं होती है' ॥ २६ ॥

**अथ वा यास्ताः कर्मवासना ग्राहद्वयवासनासहिताः क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्तीत्युक्तं, तस्मात् कथं प्रहाणमप्रहाणं चेत्यत आह । यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठत इति विस्तरः ।**

अथवा ( जब कि यह कहा जा चुका है कि ) कर्मवासनायें दो ग्राहों की वासना से युक्त होकर पूर्व विपाक के नष्ट होने पर दूसरे विपाक को उत्पन्न करती हैं' तो ( उनका ) प्रहाण तथा अप्रहाण कैसे संभव है ? इसका उत्तर है कि 'जब तक विज्ञान विज्ञप्तिमात्रता में स्थित नहीं हो जाता है, इत्यादि ( तब तक दोनों ग्राहों की वासना निहत नहीं होती है )

**यावच्चित्तधर्मतायां विज्ञप्तिमात्रसंशब्दितायां विज्ञानं नावतिष्ठति किं तर्हि ग्राह्यग्राहकोपलम्भे चरति ।**

**ग्राहद्वयं ग्राह्यग्राहो ग्राहकग्राहश्च । तस्यानुशयस्तदाहितम् अनागतग्राहद्वयोत्पत्तये बीजम् आलयविज्ञाने ।**

**यावद् अद्वयलक्षणे विज्ञप्तिमात्रे योगिनश्चित्तं न प्रतिष्ठितं भवति, तावद् ग्राह्यग्राहकानुशयो न विनिवर्तते न प्रहीयत इत्यर्थः । अत्र च बहिरुपलम्भाप्रहाणेनाध्यात्मिकोपलम्भाप्रहाणं दर्शितमिति । अतोऽस्यैवं भवति अहं चक्षुरादिभिः रूपादीन् गृह्णामीति ।**

जब तक विज्ञप्तिमात्र शब्द से वाच्य चित्तधर्मता में विज्ञान स्थित नहीं होता, अपितु ग्राह्यग्राहकोपलम्भ में विचरता है।

ग्राह्यग्राह तथा ग्राहकग्राह को ग्राहद्वय कहते हैं । उसका अनुशय का अर्थ है उसके द्वारा आलयविज्ञान में अनागत दो ग्राहों की उत्पत्ति के लिए डाला गया बीज ।

जब तक अद्वैत लक्षणवाली विज्ञप्तिमात्रता में योगी का चित्त स्थित नहीं हो जाता है, तब तक ग्राह्य तथा ग्राहक की वासना प्रहीण नहीं होती है ( यही कारिका का अर्थ है ) । जब तक बाह्य उपलब्धि का प्रहाण नहीं होता है, तब तक आध्यात्मिक उपलब्धि का प्रहाण नहीं होता है, यही इससे दर्शाया गया । अतः उसको ( जिसका उपलंभ प्रहाण नहीं हुआ है ) ऐसा होता है कि—मैं चक्षु आदि ( इन्द्रियों ) से रूपादि ( विषयों ) को ग्रहण करता हूँ ।



( २७ )

**इदमिदानीं वक्तव्यं किम् अर्थरहितचित्तमात्रोपलम्भात् चित्तधर्मतावस्थानं नेत्याह । किं तर्हि—**

**विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः ।**
**स्थापयन्नग्रतः किंचित् तन्मात्रेनावतिष्ठते ॥ २७ ॥**

**इति । अथ वा यः पुनराभिमानिकः श्रुतमात्रकेण जानीयाद् अहं विज्ञप्तिमात्रतायां शुद्धायां स्थित इति, तद्ग्रहव्युदासार्थमाह—विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भत इत्यादि । विज्ञप्तिमात्रमेवेदम् अर्थरहितं, न बाह्योऽर्थोऽस्तीति एवमुपलम्भतो ग्रहणतः चित्रीकरणत इत्यर्थः । अग्रत इत्यभिमुखम् । स्थापयन्निति यथाश्रुतं मनसा । बहुप्रकारत्वात् योगाचारालम्बनानां किंचिदित्याह । अस्थिसंकलिकं वा नीलकं वापि पूयकं वा विपड्डुमकं वा व्याध्मातकादिकं वा । तन्मात्रे नावतिष्ठते विज्ञानोपलम्भाप्रहाणात् ।**

( २७ )

अब यहां यह बतलाना चाहिए कि क्या विषयरहित चित्तमात्र की उपलब्धि से चित्तधर्मता की अवस्थिति होती है ? ( इसका उत्तर है कि ) नहीं । तब क्या है ?

यह विज्ञप्तिमात्र हैं, ( ऐसा कहने वाला भी ) आगे किसी पदार्थ को रख कर उसकी उपलब्धि करते हुए ही ( ऐसा ) कहता है । अतः वह विज्ञप्तिमात्रता में स्थित नहीं रहता है ॥ २७ ॥

अथवा जो आभिमानिक विज्ञप्तिमात्रता के दर्शन को सुनकर ही समझ ले कि 'मैं शुद्धविज्ञप्तिमात्रता में स्थित हो गया हूँ', उसके इस आग्रह के निराकरण के लिए कहते हैं :—यह विज्ञप्तिमात्र है, इस उपलंभ से, इत्यादि ।

'यह सब कुछ विज्ञप्तिमात्र ही है, यह भी किसी बाह्यवस्तु की उपलब्धि होने पर ज्ञान होता है' । यह सब कुछ विषयरहित विज्ञप्तिमात्र ही है, बाह्य पदार्थ नहीं हैं, ऐसी विषयोपलब्धि होने से, या ग्रहण से ( यह ज्ञात होता है ), ऐसा जानना चाहिए । 'अग्रतः' का अर्थ है सामने । 'स्थापयन्' का अर्थ है मन से रखते हुए । योगाचार के आलम्बनों के बहुत प्रकारवाला होने से 'उनमें

से कुछ'—यह पद कहा गया। अस्थिसंकलिक या नीलक या पूयक या विपडुमक या व्याधमातक इत्यादि। विज्ञान की उपलब्धि का प्रहाण नहीं होने से विज्ञप्तिमात्र में अवस्थिति नहीं होती है।

( २८ )

कदा पुनर्विज्ञानग्राहस्य प्रहाणं चित्तमात्रतायां वा प्रतिष्ठितो भवतीत्यत आह—

**यदालम्बनं विज्ञानं नैवोपलभते तदा।**
**स्थितं विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥ २८ ॥**

इति। यस्मिन् काले देशनालम्बनं अववादालम्बनं प्राकृतं वा रूपशब्दाद्यालम्बनं विज्ञानं बहिश्चित्तात् नोपलभते न पश्यति न गृह्णाति नाभिनिविशते, यथाभूतार्थदर्शनात् न तु जात्यन्धवत्, तस्मिन् काले विज्ञानग्राहस्य प्रहाणं स्वचित्तधर्मतायां च प्रतिष्ठितो भवति। अत्रैव कारणमाह। ग्राह्याभावे तदग्रहादिति। ग्राह्ये सति ग्राहको भवति न तु ग्राह्याभाव इति। ग्राह्याभावे ग्राहकाभावमपि प्रतिपद्यते न केवलं ग्राह्याभावम्। एवं हि सममनालम्ब्यालम्बकं निर्विकल्पं लोकोत्तरं ज्ञानमुत्पद्यते। ग्राह्यग्राहकाभिनिवेशानुशयाः प्रहीयन्ते, स्वचित्तधर्मतायां च चित्तमेव स्थितं भवति।

( २८ )

पुनः विज्ञानग्राह का प्रहाण तथा चित्तमात्रता में स्थिति कब होती है, इसे ( दर्शाते हुए ) कहा गया है :—

'जब विज्ञान आलम्बन का ग्रहण नहीं करता है, उस समय विज्ञप्तिमात्रता में चित्त स्थित हो जाता है क्योंकि ग्राह्यविषय के अभाव में ग्राहकविज्ञान का भी ग्रहण नहीं होता है' ॥ २८ ॥

जिस समय देशना या अववाद के आलम्बन से उत्पन्न होने वाले या प्राकृत रूपशब्दादि आलम्बनों से उत्पन्न होने वाले विज्ञान को चित्त से बाहर नहीं ग्रहण करता, यथाभुत वस्तु के दर्शन के प्रभाव से, न कि जात्यन्ध के समान असमर्थता के कारण, उससमय विज्ञानग्राह का प्रहाण हो जाता है तथा चित्तधर्मता में अवस्थिति हो जाती है। यहां इसका कारण बतलाया गया है। ग्राह्यके के अभाव में उसके ग्राहक का ग्रहण नहीं होता है। ग्राह्य के होने पर ग्राहक होता है, ग्राह्य के अभाव में नहीं। ( अतः ) ग्राह्य के अभाव में ग्राहक के अभाव की प्राप्ति होती है, केवल ग्राह्य के अभाव की ही नहीं। इस प्रकार

1. समसमा।



आलम्ब्य और आलम्बक से रहित निर्विकल्पक लोकोत्तर ज्ञान उत्पन्न होता है। ग्राह्य गाहक के आग्रह की वासनायें नष्ट हो जाती हैं, स्वचित्तधर्मता में चित्त स्थित हो जाता है।

( २९ )

यदैवं विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति, तदा कथं व्यपदिश्यत इत्याह—

**अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत्।**
**आश्रयस्य परावृत्तिर् द्विधा दौष्ठुल्यहानितः ॥ २९ ॥**

( २९ )

जब इस प्रकार विज्ञप्तिमात्रता में चित्त अवस्थित हो जाता है, तब कैसी स्थिति है—उसको दर्शाते हुए कहा गया है :—

"चित्त तथा उपलब्धि ( दोनों से ) रहित अवस्था की प्राप्ति होती है। वही लोकोत्तर ज्ञान है। दो प्रकार के दौष्ठुल्यों की हानि से आश्रय अर्थात् आलय विज्ञान की परावृत्ति हो जाती है" ॥ २९ ॥

( ३० )

**स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः।**
**सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः ॥ ३० ॥**

इति। तदनेन श्लोकद्वयेन दर्शनमार्गमारभ्योत्तरविशेषगत्या फलसंपत्तिरुद्भाविता विज्ञप्तिमात्रप्रविष्टयोगिनः। तत्र ग्राहकचित्ताभावात् ग्राह्यार्थानुपलम्भाच्च अचित्तोऽनुपलम्भोऽसौ। अनुचितत्वात् लोके समुदाचाराभावात् निर्विकल्पत्वाच्च लोकादुत्तीर्णमिति ज्ञानं लोकोत्तरं च तदिति। तस्य ज्ञानस्यानन्तरमाश्रयस्य परावृत्तिर्भवतीति ज्ञापनार्थमाह—'आश्रयस्य परावृत्तिरिति'।

( ३० )

"वही अनाश्रव धातु है, जो अचिन्त्य कुशल, ध्रुव तथा सुखस्वरूप विमुक्तिकाय है। यही महामुनि ( बुद्ध ) का धर्मकाय है" ॥ ३० ॥

इन दोनों श्लोकों से विज्ञप्तिमात्रता में प्रविष्ट योगी के दर्शन मार्ग से प्रारम्भ करके उत्तर विशेष गति से फलसम्पत्ति की विशेष उद्भावना की गयी है। उसमें ग्राहकचित्त के अभाव हो जाने से तथा ग्राह्यविषय की अनुपलब्धि होने से, वह अचित्त तथा अनुपलम्भ है। (लोक व्यवहार के) अयोग्य होने से उसका लोक में व्यवहार नहीं होता है, तथा निर्विकल्पक होने से वह लोक से उत्तीर्ण है, अतः कहा जाता है कि वह लोकोत्तर ज्ञान है। उस ज्ञान के अनन्तर आश्रय (आलय) की परावृत्ति हो जाती है, इसको दर्शाने के लिए कहा गया है—"आश्रय परावृत्ति हो जाती है"।

**आश्रयोऽत्र सर्वबीजकमालयविज्ञानम्। तस्य परावृत्तिर्या दौष्ठुल्य-द्वयवासनाभावेन निवृत्तौ सत्यां कर्मण्यताधर्मकायाद्वयज्ञानभावेन परावृत्तिः। सा पुनराश्रयपरावृत्तिः कस्य प्रहाणात् प्राप्यते ? अत आह—"द्विधा दौष्ठुल्यहानितः।" द्विधेति, क्लेशावरणदौष्ठुल्यं ज्ञेया-वरणदौष्ठुल्यं च। दौष्ठुल्यम् आश्रयस्याकर्मण्यता। तत् पुनः क्लेश-ज्ञेयावरणयोर् बीजम्। सा पुनराश्रयपरावृत्तिः श्रावकादिगतदौष्ठुल्य-हानितश्च प्राप्यते।**

यहां आश्रय का अर्थ है-सभी धर्मों का बीज आलयविज्ञान। उसकी परावृत्ति का अर्थ है द्विविध दौष्ठुल्यवासनाओं के अभाव से उसकी निवृत्ति होने पर कर्मण्यता और धर्मकाय के ऐक्यभाव के ज्ञान से परिवर्तन होना। वही पुनः आश्रय परावृत्ति है। किसके प्रहाण से प्राप्त होती है? इसको दर्शाया गया है—कि दो प्रकार के दौष्ठुल्य की हानि से। दो प्रकार से अभिप्राय है-क्लेशावरण-दौष्ठुल्य तथा ज्ञेयावरणदौष्ठुल्य। आश्रय की अकर्मण्यता को दौष्ठुल्य कहते है। वही क्लेशावरण एवं ज्ञेयावरण का बीज है। पुनः वह आश्रयपरावृत्ति श्रावकादि दौष्ठुल्य की हानि से प्राप्त होती है।

**यदाह—विमुक्तिकाय इति, बोधिसत्त्वगतदौष्ठुल्यहानितश्च प्राप्यते। यदाह—'धर्माख्योऽयं' महामुनेरिति' द्विधा आवरणभेदेन सोत्तरा निरुत्तरा च आश्रयपरावृत्तिरुक्ता।**

जो विमुक्तिकाय कहा गया है, वह बोधिसत्त्वगत दौष्ठुल्य की हानि से प्राप्त होता है। जो महामुनि का धर्मकाय कहा गया है वह आवरण भेद से सोत्तरा, निरुत्तरा दो प्रकार की आश्रयपरावृत्ति है।

१. A. अपि।



**अत्र गाथा—**

**ज्ञेयमादानविज्ञानं द्वयावरणलक्षणम्।**
**सर्वबीजं क्लेशबीजं बन्धस्तत्र द्वयोर्द्वयोः॥**

**इति। 'श्रावकबोधिसत्त्वयोः। आद्यस्य क्लेशबीजं, इतरस्य द्वया-वरणबीजम्। तदुद्घातात् सर्वज्ञतावाप्तिर्भवतीति। 'स एवानास्रवो धातुरिति' स एवाश्रयपरावृत्तिरूपः, अनास्रवो धातुरित्युच्यते, निर्दौ-ष्ठुल्यत्वात्। स त्वास्रवविगत इत्यनास्रवः।**

यहां गाथा है—

'द्वयावरण लक्षणवाला आलयविज्ञान को जानना चाहिये। यही सब का बीज तथा क्लेशों का बीज है, जिसके कारण (श्रावक और बोधिसत्व) दोनों को बन्धन होता है'।

श्रावक तथा बोधिसत्त्व को। पहले को क्लेशबीज तथा दूसरे को द्वय आवरणबीज होते हैं। उनके नाश से सर्वज्ञता की प्राप्ति होती है 'वही अनाश्रव धातु है' (इस पद का अर्थ है) कि वही आश्रयपरावृत्ति रूप होने से, दौष्ठुल्यों से रहित होने से अनाश्रव धातु कहलाता है। (इसका अभिप्राय यह है कि आलयविज्ञान अनाश्रवधातु के रूप में परिवर्तित हो जाता है)। वह आश्रव से रहित होने के कारण अनाश्रव है।

**आर्यधर्महेतुत्वाद् धातुः। हेत्वर्थो ह्यत्र धातुशब्दः। अचिन्त्यस्तर्का-गोचरत्वात् प्रत्यात्मवेद्यत्वात् दृष्टान्ताभावाच्च। कुशलो विशुद्धा-लम्बनत्वात् क्षेमत्वात् अनास्रवधर्ममयत्वाच्च। ध्रुवो नित्यत्वात् अक्षय-तया। सुखो नित्यत्वादेव। यदनित्यं तद्दुःखम्। अयं च नित्य इति, अस्मात् सुखः।**

आर्यधर्म का हेतु होने से धातु है। धातु शब्द यहां हेतु के अर्थ में है। तर्क से अगोचर होने से, प्रत्यात्मवेद्य होने से, उसके दृष्टान्त का अभाव होने से, वह अचिन्त्य है। विशुद्ध आलम्बनवाला होने से, क्षेम होने से और अनाश्रव धर्ममय होने से कुशल है। नित्य तथा अविनाशी होने से ध्रुव है। नित्य होने से सुखस्वरूप है। जो अनित्य है, वह दुःख है। यह नित्य है, अतः सुख है।

**क्लेशावरणप्रहाणात् श्रावकाणां विमुक्तिकायः। स एवाश्रयपरा-वृत्तिलक्षणो धर्माख्योऽप्युच्यते महामुनेः। भूमिपारमितादिभावनया**

१. C. द्वयोरिति श्रावक।

क्लेशज्ञेयावरणप्रहाणात् आश्रयपरावृत्तिसमुदागमात्, महामुनेर्धर्मकाय इत्युच्यते । संसारपरित्यागात् यदनुपसंक्लेशत्वात् सर्वधर्मविभुत्वलाभतश्च धर्मकाय इत्युच्यते । महामुनेरिति परममौनेययोगात् बुद्धो भगवान् महामुनिरिति ।

त्रिंशिकाविज्ञप्तिभाष्यं समाप्तम् ॥

कृतिराचार्यस्थिरमतेः ॥



क्लेशावरण के प्रहाण से श्रावकों का वह विमुक्तिकाय है । वही आश्रयपरावृत्ति लक्षणवाला महामुनि बुद्ध का धर्मकाय भी कहलाता है । भूमिपारमितादि की भावना से क्लेश तथा ज्ञेयावरण के प्रहाण से, आश्रयपरावृत्ति के समुदागम से ( वह ) महामुनि ( बुद्ध ) का धर्मकाय कहलाता है । संसार के परित्याग से, क्लेशों का अभाव हो जाने से, सभी धर्मों में व्यापकता की प्राप्ति होने से, धर्मकाय कहलाता है । 'महामुनि का' ( धर्मकाय, ऐसा जो कहा गया है, उसमें महामुनि शब्द से ) परममौनेय के योग से भगवान बुद्ध ही ( अभिप्रेत हैं ) ।

त्रिंशिका विज्ञप्तिभाष्य समाप्त, जो आचार्य स्थिरमति की कृति है ॥



१. C. संसारापरि । २. C. तदनु ।

# अथ त्रिंशिकाविज्ञप्तिकारिकाः

आत्मधर्मोपचारो हि विविधो यः प्रवर्तते ।
विज्ञानपरिणामेऽसौ परिणामः स च त्रिधा ॥ १ ॥
विपाको मननाख्यश्च विज्ञप्तिर्विषयस्य च ।
तत्रालयाख्यं विज्ञानं विपाकः सर्वबीजकम् ॥ २ ॥
असंविदितकोपादिस्थानविज्ञप्तिकं च तत् ।
सदा स्पर्शमनस्कारवित्संज्ञाचेतनान्वितम् ॥ ३ ॥
उपेक्षा वेदना तत्रानिवृत्ताव्याकृतं च तत् ।
तथा स्पर्शादयस्तच्च वर्तते स्रोतसौघवत् ॥ ४ ॥
तस्य व्यावृत्तिरर्हत्वे तदाश्रित्य प्रवर्तते ।
तदालम्बं मनोनाम विज्ञानं मननात्मकम् ॥ ५ ॥
क्लेशैश्चतुर्भिः सहितं निवृताव्याकृतैः सदा ।
आत्मदृष्ट्यात्ममोहात्ममानात्मस्नेहसंज्ञितैः ॥ ६ ॥
यत्रजस्तन्मयैरन्यैः स्पर्शाद्यैश्चार्हतो न तत् ।
न निरोधसमापत्तौ मार्गे लोकोत्तरे न च ॥ ७ ॥
द्वितीयः परिणामोऽयं तृतीयः षड्विधस्य या ।
विषयस्योपलब्धिः सा कुशलाकुशलाद्वया ॥ ८ ॥
सर्वत्रगैर्विनियतैः कुशलैश्चैतसैरसौ ।
संप्रयुक्ता तथा क्लेशैरुपक्लेशैस्त्रिवेदना ॥ ९ ॥
आद्याः स्पर्शादयश्छन्दाधिमोक्षस्मृतयः सह ।
समाधिधीभ्यां नियताः श्रद्धाथ ह्रीरपत्रपा ॥ १० ॥
अलोभादि त्रयं वीर्यं प्रश्रब्धिः साप्रमादिका ।
अहिंसा कुशलाः क्लेशा रागप्रतिघमूढयः ॥ ११ ॥
मानदृग्विचिकित्साश्च क्रोधोपनहने पुनः ।
म्रक्षः प्रदाश ईर्ष्याथ मात्सर्यं सह मायया ॥ १२ ॥
शाठ्यं मदोऽविहिंसा ह्रीरत्रपा स्त्यानमुद्धवः ।
आश्रद्ध्यमथ कौसीद्यं प्रमादो मुषिता स्मृतिः ॥ १३ ॥
विक्षेपोऽसंप्रजन्यं च कौकृत्यं मिद्धमेव च ।
वितर्कश्च विचारश्चेत्युपक्लेशा द्वये द्विधा ॥ १४ ॥
पञ्चानां मूलविज्ञाने यथाप्रत्ययमुद्भवः ।
विज्ञानानां सह न वा तरङ्गाणां यथा जले ॥ १५ ॥

मनोविज्ञानसंभूतिः सर्वदासंज्ञिकादृते ।
समापत्तिद्वयान्मिद्धान्मूर्छनादप्यचित्तकात् ॥ १६ ॥
विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते ।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रकम् ॥ १७ ॥
सर्वबीजं हि विज्ञानं परिणामस्तथा तथा ।
यात्यन्योन्यवशाद् येन विकल्पः स स जायते ॥ १८ ॥
कर्मणो वासना ग्राहद्वयवासनया सह ।
क्षीणे पूर्वविपाकेऽन्यद्विपाकं जनयन्ति तत् ॥ १९ ॥
येन येन विकल्पेन यद्यद् वस्तु विकल्प्यते ।
परिकल्पित एवासौ स्वभावो न स विद्यते ॥ २० ॥
परतन्त्रस्वभावस्तु विकल्पः प्रत्ययोद्भवः ।
निष्पन्नस्तस्य पूर्वेण सदा रहितता तु या ॥ २१ ॥
अत एव स नैवान्यो नानन्यः परतन्त्रतः ।
अनित्यतादिवद् वाच्यो नादृष्टेऽस्मिन् स दृश्यते ॥ २२ ॥
त्रिविधस्य स्वभावस्य त्रिविधां निःस्वभावताम् ।
संधाय सर्वधर्माणां देशिता निःस्वभावता ॥ २३ ॥
प्रथमो लक्षणे नैव निःस्वभावोऽपरः पुनः ।
न स्वयंभाव एवस्येत्यपरा निःस्वभावता ॥ २४ ॥
धर्माणां परमार्थश्च स यतस्तथतापि सः ।
सर्वकालं तथाभावात् सैव विज्ञप्तिमात्रता ॥ २५ ॥
यावद्विज्ञप्तिमात्रत्वे विज्ञानं नावतिष्ठति ।
ग्राहद्वयस्यानुशयस्तावन्न विनिवर्तते ॥ २६ ॥
विज्ञप्तिमात्रमेवेदमित्यपि ह्युपलम्भतः ।
स्थापयन्नग्रतः किंचित् तन्मात्रे नावतिष्ठते ॥ २७ ॥
यदालम्बनं विज्ञानं नैवोपलभते तदा ।
स्थितं विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥ २८ ॥
अचित्तोऽनुपलम्भोऽसौ ज्ञानं लोकोत्तरं च तत् ।
आश्रयस्य परावृत्तिर्द्विधा दौष्ठुल्यहानितः ॥ २९ ॥
स एवानास्रवो धातुरचिन्त्यः कुशलो ध्रुवः ।
सुखो विमुक्तिकायोऽसौ धर्माख्योऽयं महामुनेः ॥ ३० ॥

त्रिंशिकाविज्ञप्तिकारिकाः समाप्ताः ॥
कृतिरियमाचार्यवसुबन्धोः ॥

## शब्दानुक्रमणिका



# शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | २३ | वैशेषिकैः | वैशेषिकैः, |
| ११ | २४ | परमाणुशः | परमाणुशः, |
| १८ | ४ | चक्षुविज्ञानादिका | चक्षुर्विज्ञानादिका |
| १८ | १६ | ०निविकल्प० | ०निर्विकल्प० |
| २० | २० | वाक | वाक् |
| २१ | २० | बहावद्यः | महावद्यः |
| २२ | १३ | विज्ञप्तिमात्रमेवेदं | विज्ञप्तिमात्रमेवेदं, |
| २२ | १३ | परचित्तविदः, | परचित्तविदः |
| २२ | २७ | अयाथर्थं | अयथार्थं |
| २३ | १० | तर्कविषयत्वात् | तर्काविषयत्वात् |
| २३ | १४ | विधातादिति | विघातादिति |
| २५ | १३ | क्रमेणेति र्युगपन्न | क्रमेणेतिर्युगपन्न |
| २५ | १४ | चनो | च नो |
| २७ | ७ | ०बाधञ्च | ०बोधश्चं |
| २७ | ८ | धम० | धर्मं० |
| २८ | १५ | आनुपूर्वेण | अनुपूर्वेण |
| ३० | ७ | संवृतिनिरुपादाना | संवृतिर्निरुपादाना |
| ३० | ८ | नियुक्तिकत्वात् | निर्युक्तिकत्वात् |
| ३० | २५ | संचितालम्बनाञ्च | संचितालम्बनाश्च |
| ३७ | २ | आकारो च | आकारश्च |
| ३७ | ८ | ०विज्ञाप्तिश्च | ०विज्ञप्तिश्च |
| ३७ | २८ | वह असंविदित | वह आलयविज्ञान असंविदित |
| ३९ | १८–१९ | इन्द्रियं पुनर्येन विशेषेण सुखदुःखादि वेदनीयाकार-परिच्छेदो यः स स्पर्शः । | अंशस्यास्याभावो बोद्धव्यः। |
| ४० | ८ | मनस्काराश्चेतस | मनस्कारश्चेतस |
| ४० | ३२ | ०योगेच्छानिरुद्धे | ०योगेच्छा निरुद्धे च पुनः |
| ४२ | १ | विदित | विदिति |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४२ | ११ | परिच्छिन्नालम्बनाकार-त्वात् । | परिच्छिन्नालम्बनाकार-त्वात् |
| ४२ | ११–१२ | रागद्वेषानुशयित्वाच्च, | रागद्वेषानुशयित्वाच्च । |
| ४२ | १९ | आकार वाली है । | आकार वाली है, |
| ४२ | १९ | …होने के कारण | …होने के कारण । |
| ४२ | २१ | बहां | वहां |
| ४३ | २० | स्रातो | स्रोतो |
| ४४ | १५ | उक्त | उक्तः |
| ५१ | ९ | लाभद्वेषमोहैः | लोभद्वेषमोहैः |
| ५३ | ९ | प्रवादिभिरपहतु | प्रवादिभिरपहर्तुं |
| ५३ | २१ | पुनरविक्षेपकमिका | पुनरविक्षेपकर्मिका |
| ५६ | ८ | तेनावघेन | तेनावद्येन |
| ५६ | १६ | चैवं कर्माणं | चैवंकर्माणं |
| ५६ | १६ | गहिष्यती॰ | गर्हिष्यती॰ |
| ५७ | १२ | कौशीद्य॰ | कौसीद्य॰ |
| ५९ | ३ | ॰ताच्चिर॰ | ॰ताऽच्चिर॰ |
| ५९ | २७ | क्लेशाराग॰ | क्लेशा राग॰ |
| ६० | ५ | कर्मनिर्दिश्यते | कर्म निर्दिश्यते |
| ६४ | १६ | इर्ष्या | ईर्ष्या |
| ६५ | १० | क्राधादूर्ध्वं | क्रोधादूर्ध्वं |
| ६५ | २२ | त्वमेवं कारीत्य॰ | त्वमेवंकारीत्य॰ |
| ६७ | १० | याभूतार्थं॰ | याऽभूतार्थं॰ |
| ८० | १८ | ॰दान्त परि॰ | ॰दान्तपरि॰ |
| ८१ | २३ | विशेषत्व | विशेष्यत्व |
| ९० | १७ | ग्राह्य ग्राहकभावः | ग्राह्यग्राहकभावः |
| ९१ | १९ | संस्काराः । | संस्काराः |
| ९३ | २ | जाते । | जाते ? |
| ९५ | २७ | ॰घ्राणरसस्पर्शनैः | ॰घ्राणरसनस्पर्शनैः |
| ९७ | ६ | तन्मात्रेनाव॰ | तन्मात्रे नाव॰ |
| ९७ | ८ | तदग्रहव्यु॰ | तद्ग्राहव्यु॰ |
| १०० | १० | परावृत्तिरर्या | परावृत्तिर्या |



| पृष्ठम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०० | १६ | प्राप्यते । | प्राप्यते, |
| १०० | २४ | प्राप्त होती है । | प्राप्त होती है, |
| १०० | २५ | इति, | इति । |
| १०० | २५ | प्राप्यते । | प्राप्यते, |
| १०० | २६ | महामुनेरिति' | महामुनेरिति' । |
| १०० | २८ | गया है, | गया है । |
| १०० | २९ | होता है । | होता है, |
| १०० | २९ | गया है | गया है । |
| १०३ | ७ | ॰निवृत्ता॰ | ॰निवृता॰ |
| १०३ | १० | मनोनाम | मनो नाम |
| १०४ | १८ | एवस्ये॰ | एवास्ये॰ |

